श्रीः

# ॥ वैशेषिकदर्शनम् ॥

## प्रथमाध्यायस्य प्रथमाह्निकम्

**अथातो धर्मं व्याख्यास्यामः ॥१॥**

अथशब्द आनन्तर्ये। आनन्तर्यमात्रवचनेनाप्यनेन यत्किंचत् पूर्ववृत्तं [न] समर्पणीयम्, तस्य धर्मव्याख्यानानुपयोगात्। किंत्वीश्वरप्रणामः पूर्ववृत्ततया समर्पणीयः, ईश्वरप्रणामादेव चिकीर्षितकार्यपरिपूरणोपपत्तेः। न तदानन्तर्यं वचनीयमिति चेत्? शिष्यशिक्षार्थत्वात्। इष्टदेवतानमस्कारानन्तरमेव ग्रन्थाद्यारम्भः कर्तव्य इति। कृतमङ्गलेनारब्धं कर्म समाप्यते प्रचीयते च। आगममूलत्वाच्चास्यार्थस्य व्यभिचारो न दोषाय। तस्य कर्मकर्तृसाधनवैगुण्यहेतुकत्वात्। साद्गुण्येऽपि विघ्नहेतूनां बलीयस्त्वात्। न चैवं सति किमनेनेति वाच्यम्। प्रचितस्यास्यैव बलवत्तरविघ्नवारणेऽपि कारणत्वात्। न हि घनमुक्तमुदकमेकस्तृणकदम्बो वारयितुं न समर्थ इति तदर्थं नोपादीयते। सजातीयप्रचयसंवलितस्य तस्य शक्तत्वात्। न च विघ्नहेतुसद्भावनिश्चयाभावाद् वारणकारणमनुपादेयम्। तत्संदेहेऽपि तदुपादानस्य न्याय्यत्वात्। अन्यथानुपस्थितपरिपन्थिभिः पार्थिवैर्द्विरदयूथपतयो नाद्रियेरन्।

अत इति हेतौ। यतोऽधीतसाङ्गवेदावगतस्वर्गापवर्गार्थिनः तत्साधनजिज्ञासवो ग्रहणधारणादिसमर्थाः वेदाच्च तत्साधनमनधिगच्छन्तः पृच्छन्ति अत इत्यर्थः।

न च त्रिदिवाभिलाषी यजताम् इत्यादेस्त्रिदिवसाधनं धर्मोऽवगम्येत इति युक्तम्। प्रकृत्यर्थस्य यागादेः प्रत्ययार्थस्य च भावनायाः क्षणिकत्वेन कालान्तरीयफलसाधनत्वयोग्यतारहितस्य तद्बोधनासिद्धेः। अव्यवहितपूर्वापरभावनियमो हि साध्यसाधनभावो योग्यता। क्व तर्हि त्रिदिवेति वाक्यस्य प्रामाण्यम्? धर्मसाध्ये त्रिदिवे तत्साधने यागे च। त्रिदिवेत्यस्यार्थः–त्रिदिवाभिलाषी यागं कुर्यादिति। यागस्य त्रिदिवासाधनत्वेऽपि स्वर्गसाधनधर्मसाधनत्वात् स्वर्गकामानुष्ठेयत्वम्। धर्मः पुनः वैशेषिकशास्त्रप्रतिपादितानुमानगम्य एव।

यतो न वेदाद् धर्मावगतिरतो धर्मं व्याख्यास्यामः। विशब्दो विशेषे। विशेषश्च प्राधान्यम्। तेन विशेषतः प्राधान्येन धर्मं व्याख्यास्यामः। द्रव्यादिपदार्थास्तु तदङ्गतयेति सिध्यन्ति। यद्वा विशब्दो विविधत्वे। प्रवर्तकनिवर्तकादिभेदेन अनेकप्रकारमित्यर्थः। आङ् अभिविधौ। न मर्यादायाम्। परिवर्जनीयाभावात्। व्याख्यास्याम इति ख्या प्रकथने [ पाणिनीयधातुपाठे १०६० ] इत्यस्य धातो रूपम्। प्रकृष्टनिदुष्टधर्मप्रमाणत्वप्रतिपादकत्वम्। तच्च न शास्त्रान्तरे। तत्प्रतिपादितधर्माणां यथास्थानं दोषाभिधानात्।

अत्राकारप्रश्लेषेणाधर्मव्याख्याप्रतिज्ञापि द्रष्टव्या। यतो वेदाद्यवगतनरकादिजिहासवस्तत्साधनजिज्ञासवः पृच्छन्ति, अतोऽधर्मं व्याख्यास्याम इत्यर्थः॥

**यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः ॥२॥**

अभ्युदयः स्वर्गादिसुखम्। निःश्रेयसं मुक्तिः। तयोः सिद्धिः उत्पत्तिर्यतः। उत्पत्तिमतः कारणसंबन्धाव्यभिचाराद् यत इत्युक्तम्। स्वर्गापवर्गावस्मत्प्रत्यक्षनिष्ठगुणत्वावान्तरजातिरहितगुणजन्यौ जनिमत्त्वात्। यदित्थं तत्तथा। यथा पतनम्। तथा चेमौ। ततस्तथा॥

**तद्वचनादाम्नायस्य प्रामाण्यम् ॥३॥**

तयोः स्वर्गापवर्गयोः वचनात् प्रतिपादनात् प्रमितिजननात् आम्नायस्य श्रुतिस्मृतीतिहासादेः प्रामाण्यम् प्रमितिकारणत्वम्॥

**पृथिव्यापस्तेजो वायुराकाशं कालो दिगात्मा मन इति द्रव्याणि ॥४॥**

इह द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाख्यं प्रमेयं प्रतिपादनीयम्। अपरथा व्याप्त्याद्यसिद्धावनुमानाप्रवृत्तेस्तदधीनधर्मनिर्णयायोगादिति प्राप्ते तद्विभागार्थमिदं सूत्रम्। भावाभावभेदाद् द्वेधा प्रमेयविभागः प्रथमं सूत्रकृतोऽभिप्रेतः। ततो द्रव्यं गुणः कर्म सामान्यं विशेषः समवाय इति भावविभागः सूत्रकृतोऽभिमतः, अग्रे द्रव्यादिभावषट्कप्रतिपादनात्। इदं तु सूत्रं द्रव्यविभागपरम्। द्रव्यमित्युक्ते पृथिव्यादिविशेषानवगमात्। विशेषावगमो हि विभागफलम्।

उदयनादयस्तु न्यूनाधिकसंख्याव्यवच्छेदार्थं विभागवचनमित्याहुः।

ननु पृथिव्यादिशब्दैः पृथिवीत्वादिजात्याश्रयव्यक्तयोऽभिधीयन्ते पृथिवीत्यादिजातयो वा। आद्येऽप्येकैकतद्व्यक्तिरुच्यते, समस्ततद्व्यक्तयो वा? प्रथमे विभागन्यूनत्वम्, एकैकपृथिवीत्वाद्याश्रयव्यक्तिव्यतिरिक्तपृथिवीत्वाद्याश्रयव्यक्तीनामविभजनात्। न द्वितीयः, पृथिवी तेज इत्याद्येकवचनानुपपत्तेः। पृथिव्यादिप्रतिपादितानामनन्तव्यक्तिरूपत्वात्। नापि द्वितीयः, विभागन्यूनत्वाधिकत्वापत्तेः। पृथिव्यादिपदानां पृथिवीत्वादिजातिपरत्वे तद्व्यक्तीनामप्रतिपादनाद् विभागन्यूनत्वम्। अद्रव्याणामपि पृथिवीत्वादीनां विभजनाद् विभागाधिक्यमिति। तन्न; पृथिव्यादिपदानां सकलतज्जात्याश्रयव्यक्तिपरत्वेऽपि पृथिवीत्वादिजात्यैकत्वप्रतिपादकत्वेनैकवचनोपपत्तेः। जातेरपि व्यक्तिवत् प्रातिपदिकार्थत्वात्। अप्रातिपदिकार्थत्वे चोपलक्षणभूतया जात्या प्रत्ययार्थस्यैकत्वस्यान्वयो भविष्यति। अयं घट इत्यादौ देशकालयोरुपलक्षणयोरन्वयदर्शनात्। इतिशब्दः समाप्तौ। समाप्तानि द्रव्याणि। इतोऽतिरिक्तानि न सन्तीत्यर्थः। द्रव्यत्वमत्यन्ताभावप्रतियोगि जातित्वात्, गोत्ववत्। अत्र समुदायप्रसिद्ध्या नाप्रसिद्धविशेणता॥

**रूपरसगन्धस्पर्शाः संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नश्च गुणाः ॥४॥**

रूपरसगन्धस्पर्शा इति समासस्यैकपद्यम्। एकैकेन्द्रियार्थत्वमेकविभक्तिकत्वं च प्रयोजनम्। आत्रेयाचार्यास्तु रूपरसगन्धस्पर्शानां नित्यत्वानित्यत्वपाकजत्वादिसाधर्म्यप्रतिपादनं प्रयोजनमित्याहुः। संख्या इति बहुवचनं संख्यात्वावान्तरैकत्वद्वित्वत्रित्वत्वादिपरिग्रहार्थम्। एकत्वसमुच्चयविशेषा एव द्वित्वादय इति चेत्, न। द्वित्वादिजातिव्यतिरेकेण तत्समुच्चयविशेषानिरूपणात्। परिमाणानीति बहुवचनं परिमाणतावान्तराणुत्वमहत्वह्रस्वत्वदीर्घत्वख्यापनार्थम्। पृथक्त्वमित्येकवचनं पृथक्त्वत्वावान्तरद्विपृथक्त्वत्वादिजातिनिरासार्थम्। द्विपृथगित्यादिव्यवहारस्य द्वित्वाद्यवच्छिन्नपृथक्त्वादेवोपपत्तेरिति केचित्—तन्न, एकैकनिष्ठपृथक्त्वव्यावृत्तानां द्वित्रिनिष्ठपृथक्त्वत्वादिजातीनां जात्यन्तरसमानन्यायेन सिद्धत्वात्। तस्मादेकवचनं पृथक्त्वत्वजातेरेकत्वख्यापनार्थम्। क्वचिदेकत्वख्यापने समानन्यायतया रूपत्वाद्येकत्वस्यापि शक्यावगमत्वान्न सर्वत्रैकवचनप्रसङ्गः। ज्ञानत्वव्यतिरिक्ता ज्ञाननिष्ठप्रमात्वसाक्षात्त्वानुमितित्वसंशयत्वविपर्ययत्वजातयो न सन्तीति गुरुमतनिरसनार्थं बुद्धय इति बहुवचनम्। प्रयत्नश्चेति

चकारोऽनुक्तगुरुत्वद्रवत्वस्नेहसंस्कारधर्माधर्मशब्दसमुच्चयार्थः । तस्मात् कण्ठोक्ताः सप्तदश चशब्दसमुच्चिता गुरुत्वादयः सप्तेति चतुर्विंशतिर्गुणाः ।

**उत्क्षेपणमवक्षेपणमाकुञ्चनं प्रसारणं गमनमिति कर्माणि ॥६॥**

उत्क्षेपणत्वं जातिविशेषः । तदाश्रय उत्क्षेपणम् । एवमवक्षेपणादयो निर्वाच्याः । भ्रमणरेचनोर्ध्वज्वलनादीनां गमनान्तावर्भावेऽपि विभागन्यूनत्वम् । भ्रमणादयो गमनत्ववन्तः उत्क्षेपणत्वादिरहितकर्मत्वात् संप्रतिपन्नवत् ॥

**सदनित्यं द्रव्यवत् कार्यं कारणं सामान्यविशेषवदिति द्रव्यगुणकर्मणामविशेषः ॥७॥**

सदिति भावप्रधानो निर्देशः । सत्त्वमित्यर्थः । एवमनित्यमित्यादौ । सामान्यविशेषवदिति सामान्यवत् विशेषवदिति विवेचनीयम् । अविशेषः साधर्म्यम् । सत्त्वानित्यत्वद्रव्यवत्त्वकार्यत्वकारणत्वसामान्यवत्त्वविशेषवत्त्वानि द्रव्यगुणकर्मणां साधर्म्याणीत्यर्थः । इतिशब्द एवंविधाभिधेयत्वप्रमेयत्वादिपरिग्रहार्थः । सत्त्वमस्तित्वं विधिप्रत्ययविषयत्वं प्रतियोग्यनपेक्षनिरूपणीयत्वमिति यावत् । अभिधेयत्वमभिधानयोग्यता, शब्देन संगतिलक्षणः संबन्धः । ज्ञेयत्वं ज्ञानयोग्यता ज्ञाप्यज्ञापकसंबन्धः । अस्तित्वं जातिः सत्तारूपा सामान्यादावप्यस्ति । सामान्ये सामान्यस्वीकारे नानवस्थादोषः, दृष्टपरंपरात्वेन मूलक्षयाभावात् । अनित्यत्वं नाशप्रतियोगित्वं कार्यद्रव्यगुणकर्मणामविशेषः । द्रव्यवत्त्वं द्रव्याश्रितत्वम् । कार्यत्वं प्रागभावप्रतियोगित्वम् । कारणत्वं जनकत्वं सकलपदार्थनिष्ठो धर्मः । ज्ञानेतरकार्यं प्रति कारणत्वं तु द्रव्यादीनां त्रयाणामेव । सामान्यवत्त्वमनुवृत्ताश्रयत्वम् । विशेषवत्त्वं व्यावृत्ताश्रयत्वम् । सामान्यविशेषवत्त्वमनुवृत्तव्यावृत्ताश्रयत्वम् ।

**द्रव्याणि द्रव्यान्तरमारभन्ते ॥८॥**

अन्त्यावयवित्वरहितानि स्पर्शवन्ति द्रव्याणि द्रव्यान्तरमारभन्ते । स्वात्मनि कार्यद्रव्यमारभन्ते । आरभ्यारम्भकद्रव्ययोर्भेदप्रतिपत्त्यर्थमन्तरपदम् । सांख्या हि कार्यकारणयोरभेदमिच्छन्ति । प्रमाणयन्ति च तन्तवः पटान्न भिद्यन्ते पटकारणत्वात् । यद् पटाद् भिद्यते न तत् पटकारणम् । यथा घट इति । तन्न । पटाद् भिन्नत्वेन निश्चिते कुविन्दादौ व्यभिचारात् । न च पटोपादानत्वं हेतुः । तत्समवायित्वस्य

तन्तौ परस्यासिद्धेः, तदाकारपरिणामित्वस्यास्माकमसिद्धेः, तदुभयानुगतसाधारण-रूपानिरूपणाच्च। आरभ्यारम्भकयोर्भेदः प्रत्यक्षानुमानविषयः। अयं तन्तुः एतस्मात् पटात् भिद्यते तन्तुत्वात् तन्त्वन्तरवत्। अयं पटः एतस्मात् तन्तोर्भिद्यते पटत्वात् पटान्तरवदिति ॥

## गुणाश्च ॥९॥

गुणान्तरमारभन्त इत्युनुषङ्गः। चकारस्य द्वौ विलासविषयौ। तत्रैकः– न केवलं द्रव्याणि द्रव्यान्तरमारभन्ते, किंतु गुणा अपि, द्रव्यारम्भकसंयोगेश्वरज्ञानादीनां पटादिद्रव्यजनकत्वाद् इति। अन्यस्तु गुणः गुणान्तरं चेति ॥

## कर्म कर्मसाध्यं न विद्यते ॥१०॥

कर्म साध्यं कार्यं यस्त तत् कर्मसाध्यम्। कर्मजन्यं कर्म नेति कर्मणः कर्मजनकत्व-निषेधः। विद्यते तत्र प्रमाणमस्तीत्यर्थः। कर्म न कर्मजनकं, कर्मत्वादन्त्यकर्मवदिति ॥

## कार्याविरोधि द्रव्यं कारणाविरोधि च ॥११॥

कार्यमविरोधि अनाशकं यस्य तत् कार्याविरोधि। कारणमविरोधि अनाशकं यस्य, तत् कारणाविरोधि। तदनेन कार्यकारणाविनाश्यत्वं द्रव्याणां साधर्म्यमुक्तम्। आश्रयनाशादसमवायिनाशाद् वा द्रव्यनाश इति नियमात्। कारणपदेन समवाय्यसमवायिनी विवक्षिते ॥

## उभयथा गुणः ॥१२॥

कार्यविरोधी कारणविरोधी च। नतु कार्याविरोधी कारणाविरोधी चेति। कार्याविरोधित्वस्य प्रथमादिशब्दे ज्ञानादिजनकज्ञानादौ च बाधात्। कारणा-विरोधित्वस्य चोपान्त्यशब्दविनाश्यान्त्यशब्दे बाधात् ॥

## कारणाभावात् कार्याभावः ॥१३॥

समवाय्यसमवायिकारणनाशात् कार्यद्रव्यनाशः। समवायिनाशोऽसमवायिनाशो निमित्तनाशो गुणान्तरं च गुणविनाशहेतुः। समवायिनाशः संयोगश्च कर्मविनाशहेतुरिति विवेकः।

ननु समवायिनाशोऽसमवायिनाशो निमित्तनाशो वा द्रव्यनाशायेत्युक्तम्। [ तत्र समवायिनाशो न द्रव्यनाशकारणम्, किंतु असमवायिनाश एव, प्रमाणं च तत्रानुमानं तच्च, ] विमतो द्रव्यविनाशोऽवयवसंयोगनाशजन्यः द्रव्यनाशत्वात्, तन्तुसंयोगनाशजन्यपटनाशवत् इति चेत्—न, तन्तुविनाशात् पटविनाश इति प्रत्यक्षविरोधात्। अविरोधे वा सर्वत्रावयवसंयोगविनाशस्यैव द्रव्यविनाशहेतुत्वमस्तु ॥

**न तु कार्याभावात् कारणाभावः ॥१४॥**

इतरत्र शङ्का व्यावर्तकशङ्का च, यथा कारणनाशे द्रव्यनाशः, तथा कार्यनाशे कारणद्रव्यनाशोऽस्तु विशेषाभावादिति। कार्यद्रव्यनाशो न कारणद्रव्यनाशहेतुः, पटनाशेऽपि तन्तूनामुपलम्भादिति भावः ॥

**क्रियावद् गुणवत् समवायिकारणमिति द्रव्यलक्षणम् ॥१५॥**

क्रियावदित्यादिनिर्देशो भावप्रधानः। क्रियावत्त्वं गुणवत्त्वं समवायिकारणत्वमित्यर्थः क्रियावत्त्वं न द्रव्यलक्षणम्, गगनादावव्यापकत्वादिति चेत्—न, मूर्तद्रव्यलक्षणत्वात्। क्रियावत्त्वेन मूर्तानां द्रव्यत्वमापाद्य तन्निदर्शनेनाकाशादीनामपि तदनुमानात्। यद्वा, क्रियाशब्देनात्र न कर्माभिमतम्। किं तूत्पत्तिविनाशौ धात्वर्थत्वात्। धात्वर्थो हि क्रिया। धात्वर्थत्वं च उत्पद्यते विनश्यतीति प्रयोगदर्शनात्। उत्पत्तिश्च प्रागभाव एव। क्रिया विद्यतेऽस्मिन्निति सप्तम्यर्थे प्रत्ययः। तेन क्रियावदिति प्रागभावाधिकरणं प्रध्वंसाधिकरणं चेत्यर्थः स्यात्। तथा च प्रागभावाधिकरणं प्रध्वंसाधिकरणं च द्रव्यमिति लक्षणद्वयं सिध्यति। न चानयोरव्यापकत्वम्। सर्वद्रव्याणां संयोगादिप्रागभावप्रध्वंसाधिकरणत्वात्। नातिव्यापकत्वम्, प्रागभावप्रध्वंसयोः समवायिकारणमात्रनिष्ठत्वात्। संबन्धमात्रस्य वत्यर्थत्वात्।

गुणवत्त्वं गुणत्वेऽतिव्यापकमिति चेत्—न। न हि शुक्लो घट इतिवत् शुक्लं गुणत्वमित्यनुभवः। कार्याश्रयत्वं समवायिकारणत्वम्। इतिशब्द एवंविधलक्षणान्तरपरिग्रहार्थः। तद्यथा—संख्याश्रयो द्रव्यम्। परिमाणाश्रयो द्रव्यम्। संयोगाश्रयो द्रव्यम्। विभागाश्रयो द्रव्यमिति।

ननु लक्षणप्रयोजनं किं द्रव्यत्वज्ञानं द्रव्यशब्दवाच्यत्वज्ञानं वा [ द्रव्यार्थप्रवृत्तिप्रयोजकद्रव्यशब्दप्रयोगतज्जन्यज्ञानं वा इतरभेदज्ञानं वा, ] गुणत्वादिरहितत्वविशिष्टद्रव्यज्ञानं वा ? नाद्यः, द्रव्यत्वसाक्षात्कारस्येन्द्रियादेवोपपत्तेः। द्रव्यत्वानुमितेश्च लिङ्गादेवोपपत्तेः। द्रव्यलक्षणमेव द्रव्यत्वलिङ्गमिति चेत्—न। द्रव्यत्वासिद्धावप्रसिद्धविशेषणत्वात्। सिद्धौ वा साधनवैयर्थ्यात्। [ नापि द्वितीयः, द्रव्यत्वज्ञानाभावे तज्ज्ञानासंभवात्, ] द्रव्यशब्दवाच्यात् द्रव्यत्वात् व्यावृत्तत्वेनासाधारणत्वाच्च। द्रव्यत्वमपि पक्ष एवेति चेत्—न, तत्र गुणवत्त्वस्यासिद्धत्वात्। वृद्धव्यवहारादेव द्रव्यशब्दवाच्यत्वसिद्धेश्च। न तृतीयः, द्रव्यत्वज्ञानादेव द्रव्यार्थिनः प्रवृत्तिसिद्धेः। द्रव्यशब्दवाच्यत्वज्ञानादेव द्रव्यशब्दप्रयोगतज्जन्यज्ञानोपपत्तेः। न चतुर्थः, इतरशब्देन द्रव्यलक्षणवतामपि उपादाने व्याघाताद् बाधाच्च। द्रव्यलक्षणरहितोपादाने च द्रव्यलक्षणरहितरसादिव्यावृत्तिमतो रूपादेः सपक्षादपि व्यावृत्तत्वेन द्रव्यलक्षणस्यासाधारण[त्व]प्रसङ्गात्। द्रव्यलक्षणरहितपदेन सर्वद्रव्यलक्षणरहितं विवक्षितमिति चेत्— न, सर्वशब्देन त्वधिगतद्रव्यलक्षणरहितव्यावृत्तिमतोऽस्मदाद्यधिगतद्रव्यलक्षणरहितात् सपक्षादपि व्यावृत्तत्वेन द्रव्यलक्षणस्यासाधारणत्वप्रसङ्गात्। त्वदधिगतविशेषणत्वाच्च द्रव्यलक्षणरहितं सर्वं मयावगम्यते इति चेत्—न, असन्निकृष्टे त्वदिन्द्रियाप्रवृत्तेः। अननुसंहितलिङ्गे च तवानुमित्यनुदयात्। न च पञ्चमः, गुणत्वकर्मत्वजातित्वविशेषत्वसमवायत्वाभावत्वविरहाभावानां गुणत्वादीनामेकत्राभावेन साध्याभावस्य साधनाभावेन व्याप्त्यसंभवात्। गुणत्वकर्मत्वजातित्वविशेषत्वसमवायत्वाभावत्वप्रतियोगिकषडत्यन्ताभाववत्त्वविरहस्य च गुणत्वादिव्यतिरेकिणः अभावस्य प्रसिद्धिमन्तरेण ग्रहीतुमशक्यत्वेन साधनाभावे व्याप्तिग्रहणासंभवादिति। मैवम्, केवलव्यतिरेकिणो द्रव्यलक्षणत्वात् द्रव्यसिद्धेः। न चाप्रसिद्धविशेषणत्वम्, साध्याप्रसिद्धेरनुमानाङ्गवैल्यरूपत्वाभावात्, अनुमानाङ्गवैकल्यानापादकत्वाच्च। साध्याप्रसिद्धिः साध्यसंदेहं विघटयन्ती पक्षधर्मताभङ्गे पर्यवस्यति संदिग्धसाध्यस्य पक्षत्वादिति चेत्—न, साध्यसंदेहस्यानुमानानङ्गत्वात् साध्यानिर्णयादेवानुमानोपपत्तेः, अनिर्णीतसाध्यस्यैव पक्षत्वात्। अन्यथा व्युत्पन्नविपर्यस्तयोरनुमित्यनुदयप्रसङ्गात्। साध्याप्रसिद्धौ साध्याभावस्या साधनाभावेन व्याप्त्यनभ्युपगमात् व्यतिरेक्यप्रवृत्तिरिति चेत्— न, साध्याभावनिष्ठसाधनाभावव्याप्तेः साधनानिष्ठत्वेनसाध्यानुमित्यजनकत्वात्। साधननिष्ठसाध्यव्याप्तेरेव साध्यानुमितिजनकत्वात्।

व्यतिरेकव्याप्त्यनवगतावुपायाभावात् गुणवत्त्वस्य द्रव्यत्वेन व्याप्तिग्रहणासंभव इति चेत्—न, प्रत्यक्षस्यैवोपायत्वात् ।

यद्वा द्रव्यशब्दवाच्यत्वस्य सिद्धेर्विशेषणत्वं द्रव्यपदं वाच्यवत् पदत्वात् गोपदवत् इति विशेषणप्रसिद्धेः । न चैवं विद्यमानसपक्षत्वात् द्रव्यलक्षणस्यासाधारणता, सपक्षाद् व्यावृत्त्यनिश्चयात् । नाप्यन्वयसंभवेन केवलव्यतिरेकित्वभङ्गः । सपक्षे हेतोर्वृत्त्यनिश्चयात् । नापि व्यतिरेकिवैयर्थ्यम्, पक्षे द्रव्यशब्दवाच्यत्वस्य विशेषणसाधकानुमानेनानिश्चयात् । नापि वृद्धव्यवहारादेव द्रव्यशब्दवाच्यत्वसिद्धे- [रनुमानस्य वैयर्थ्यम्, एकसाधनेनान्यसाधनस्य वैयर्थ्याभावात्, अन्यथा अनुमानेन द्रव्यशब्दवाच्यत्वप्रसिद्धे] र्वृद्धव्यवहारवैयर्थ्यस्य दुर्वारत्वात् ।

ननु पृथिव्याद्यष्टद्रव्यगुणादिव्यावृत्तात्मसाक्षात्कारो मुक्तिहेतुः । स च पृथिव्याद्यष्टद्रव्यगुणादिव्यावृत्तात्मनिदिध्यासनजन्यः । तच्च पृथिव्याद्यष्टद्रव्यगुणादिव्यतिरिक्तात्ममननजन्यम् । तच्चात्मलक्षणादेवेति व्यर्थं द्रव्यलक्षणमिति चेत्—न, गुणादिव्यतिरिक्तात्मस्वरूपनिदिध्यासनस्योपपत्तेर्द्रव्यलक्षणस्यार्थवत्त्वादिति ॥

**द्रव्याश्रयी न गुणवान् संयोगविभागेष्वकारणमनपेक्ष इति गुणलक्षणम् ॥१६॥**

द्रव्यमाश्रयो यस्यासौ द्रव्याश्रयः । द्रव्यगुणकर्मवृत्तिसामान्यादिव्यावृत्तार्थत्वापरपर्यायः सामान्यपदार्थः, य उदयनादिभिः सत्तेत्युच्यते । द्रव्याश्रयोऽस्मिन्नस्तीति द्रव्याश्रयी अर्थत्ववानित्यर्थः । न गुणवानिति गुणशब्देन गुणविशेषाः संख्यापरिमाणपृथक्त्वसंयोगविभागा गृह्यन्ते । संयोगविभागेष्वकारणमनपेक्ष इति संयोगविभागानपेक्षकारणत्वरहितत्वं विवक्षितम्, कारणपदस्यानपेक्षपदेनान्वयात् । असमवायिकारणमनपेक्षकारणं सामग्रीतुल्यरूपत्वात् ।

विभागानपेक्षकारणत्वरहितत्वेनैव कर्मण्यतिव्याप्तेरीश्वरेच्छाज्ञानप्रयत्नादृष्टेष्वव्याप्तेश्च परिहाराद् व्यर्थं संयोगकारणत्वग्रहणमिति चेत्—न, शरीरकुड्यभागजनकहस्तकुड्यविभागाव्याप्तिपरिहारार्थत्वात् । तस्मादर्थत्वाश्रयः संख्याद्यनाश्रयः संयोगकारणत्वे सति विभागानपेक्षकारणत्वरहितो गुण इति लक्षणं सिध्यति । इतिशब्दः सूत्रे उत्क्षेपणावृत्तिसंयोगासमानाधिकरणसत्तासाक्षाद्व्याप्यजातिमान् गुण इत्येवं लक्षणान्तरपरिग्रहार्थः ॥

**एकद्रव्यमगुणं संयोगविभागेष्वनपेक्षं कारणमिति कर्मलक्षणम् ॥१७॥**

एकद्रव्यं एकद्रव्यमात्रवृत्ति। अगुणं गुणत्वरहितम्। कारणपदं च संयोगविभागाभ्यां संबध्यते। अनपेक्षं कारणमित्यनेन। कर्मपदं च त्रयेणैव संबध्यते। एकद्रव्यमात्रं विभागानपेक्षकारणं कर्म। गुणत्वरहितविभागानपेक्षकारणं कर्म। संयोगकारणत्वे सति विभागानपेक्षकारणं कर्मेति लक्षणत्रयं सूत्रार्थः। घटे चलति रूपादयश्चलन्तीति प्रत्ययात् कर्मणोऽद्रव्याश्रितत्वनिषेधार्थं द्रव्यग्रहणम्। तथा च रूपादयो न कर्मवन्तः, अद्रव्यत्वात् कर्मवत्। सूत्रे इतिशब्दः संख्यादिवृत्तिरहितसंयोगसमानाधिकरणसत्तासाक्षाद्व्याप्यजातिमत् कर्मेति लक्षणपरिग्रहार्थः॥

**द्रव्यं द्रव्यगुणकर्मणां सामान्यं कारणम् ॥१८॥**

सामान्यकारणप्रकरणमिदमारब्धम्। तन्त्वादिकं द्रव्यं पटादेर्द्रव्यस्य रूपादेर्गुणस्य उत्क्षेपणादेः कर्मणश्च सामान्यं कारणम्।

द्रव्याणि द्रव्यान्तरमारभन्ते [ १.१.८ ]

इति बहूनां द्रव्याणां द्रव्यकारणत्वमुक्तम्। अत्र त्वेकैकद्रव्यस्य द्रव्यगुणकर्मापेक्षया सामान्यकारणत्वं प्रतिपाद्यम्। अतो न पूर्वपरप्रकरणयोः पुनरुक्तत्वं परिशङ्कनीयम्॥

**तथा गुणः ॥१९॥**

यथा द्रव्यं द्रव्यगुणकर्मणां कारणं तथा गुणोऽपि। ईश्वरज्ञानेच्छाप्रयत्नधर्माधर्मादिर्द्रव्यगुणकर्मजननात्॥

**संयोगविभागानां कर्म कारणम् ॥२०॥**

सामान्यमित्यनुवर्तते। उपलक्षणं चैतत्। वेगेऽपि कर्मणः कारणत्वात्। तेन यावन्तः संयोगविभा[गवे]गाः येन कर्मणा जायन्ते, तेषां तत्कारणं तज्जन्यत्वं च साधर्म्यमिति सूत्रार्थः॥

**न द्रव्याणां कर्म व्यतिरेकात् ॥२१॥**

द्रव्यगुणभावव्यतिरिक्तत्वादित्यर्थः। कर्म न द्रव्यजनकम्, द्रव्यत्वगुणत्व-रहितभावत्वात्। सामान्यवत्। न चात्र सामान्यसत्त्वाभाव उपाधिः, गगनादौ साध्याव्यापकत्वात्॥

**गुणवैधर्म्यान्न कर्मणाम् ॥२२॥**

कर्मणो गुणवैधर्म्यं गुणत्वाभावः। कर्म न कर्मासमवायिकारणम्, गुणत्व-रहितत्वात् घटवत्।

कर्म कर्मसाध्यं न विद्यते [ १. १. १० ]

इत्यनेन कर्मत्वेन कर्मणः कर्मकारणत्वं निषिद्धम्। अत्र तु गुणवैधर्म्येणेति विभागः॥

**द्रव्याणां द्रव्यं कार्यं सामान्यम् ॥२३॥**

इदं कार्यसामान्यप्रकरणम्। सामान्यविशिष्टमेकमिति यावत्। तथा हि यद् द्रव्यं यैर्द्रव्यैर्जन्यते तत् तेषामेकं कार्यम्। यथा द्व्यणुकं परमाणुद्वयदिक्कालेश्वराणाम्। त्र्यणुकं च द्व्यणुकत्रयदिक्कालेश्वराणामित्यादि॥

**तथा गुणाः ॥२४॥**

यथा द्व्यणुकादिद्रव्यं परमाणुद्वयदिक्कालेश्वरादीनां द्रव्याणां समानकार्यम्, तथा द्व्यणुकादिरूपादयोऽपि द्व्यणुकादिदिक्कालेश्वरादिद्रव्याणां समानं कार्य-मित्यर्थः॥

**द्वित्वप्रभृतयश्च संख्याः पृथक्त्वसंयोगविभागाश्च ॥२५॥**

कार्यं सामान्यमित्यनुवर्तते। द्वित्वादयः संख्या द्विपृथक्त्वादीनि संयोगविभागाश्च द्रव्याणामनेकेषां समवायिनां समानं कार्यमित्यर्थः। तथा हि–घटपटद्वित्वं घटपटयोः कार्यम्। घटपटस्तम्भत्रित्वं घटपटस्तम्भानां कार्यम्। घटपटपृथक्त्वं घटपटयोः कार्यम्। घटपटस्तम्भपृथक्त्वं घटपटस्तम्भानां कार्यम्। संयोगविभागौ च द्वयोर्द्वयोरेव कार्यमिति।

घटादिव्यतिरिक्तसंख्या नास्तीति चेत्—एकत्वस्याग्रे प्रतिपादनात्, द्वित्वादीनां च द्वे त्रीणीत्यादिप्रत्ययसिद्धत्वात्। द्वौ घटावित्यादिप्रत्यक्षेण घटादिनिष्ठद्वित्वादेरनु-

भवात्, इदं द्वित्वमेतद्घटाद्भिन्नम्, एतद्विशेषणत्वात्, रूपवत् इत्यनुमानाच्च । न चायमसिद्धः, शुक्लो घट इतिवत् द्वौ घटावित्यादिप्रत्यक्षस्य सर्वलोकसिद्धत्वात् । द्वित्वादयो जातयः द्रव्यगुणादिव्यतिरिक्तत्वात्, गोत्ववदिति चेत्—न, असिद्धेः, गुणव्यतिरिक्तत्वसाधकप्रमाणाभावात् । द्वित्वादयो जातयः नित्यत्वे सत्यनेकसमवेतत्वात्, गोत्ववदिति चेत्—न, असिद्धेरेव, द्वित्वादीनां नित्यत्वे प्रमाणाभावात् । संख्या न गुणसंप्रतिपन्ना गुणातिरिक्तत्वात् पटवदिति चेत्—न, [न] गुण इति किं [१] गुणत्वाभावः साध्यते, [२) गुणलक्षणाभावो वा, [३] द्रव्यत्वकर्मत्वरहितजातिमत्त्वाभावो वा, [४] गुणशब्दप्रवृत्तिनिमित्तत्वाभावो वा । ( [५] कर्मत्वरहितासमवायिकारणत्वाभावो वा, [६] असमवायिकारणत्वाभावो वा ? ) न प्रथमः, अप्रसिद्धविशेषणत्वात् । प्रभाकरन्यायभूषणकारादीनां गुणत्वासिद्धेस्तदभावस्याप्रसिद्धत्वात् । न द्वितीयः, संख्याव्यावृत्तगुणलक्षणाभावसाधने सिद्धसाधनात्, संख्याव्यावृत्तत्वरहितगुणलक्षणाभावसाधने बाधात्, अर्थान्तरत्वाच्च, गुणलक्षणाभावस्य गुणत्वाभावत्वविरहात्, गुणत्वानङ्गीकारवादिनां गुणलक्षणाभावस्य गुणत्वाभावव्याप्यत्वानङ्गीकराच्च । न तृतीयः, अर्थान्यरत्वात्, द्रव्यत्वकर्मत्वरहितजातिमत्त्वस्य प्रत्यक्षसंख्यायां प्रत्यक्षसिद्धत्वाच्च । न चतुर्थः, पूर्वोपपादितार्थान्तरग्रस्तत्वात्, सिद्धसाधनाच्च । न पञ्चमः, पूर्ववदर्थान्तरग्रस्तत्वात् गुणात्वाभावेन सोपाधित्वाच्च । न षष्ठः, पूर्ववदर्थान्तरत्वात् ॥

**असमवायात् कार्यं कर्म न विद्यते ॥२६॥**

असमवायादित्यत्रानेकेष्विति शेषः । न तावत् पटकर्मणोऽनेकाश्रितत्वे प्रत्यक्षं प्रमाणम्, अननुभवात् । नाप्यनुमानम्, पटकर्म पटव्यतिरिक्तसमवेतम्, कर्मत्वात्, घटकर्मवदित्यादीनां प्रत्यक्षबाधितत्वात् । पटकर्मणः संख्यात्वरहितजातिमत्त्वाभावो वा, गुणशब्दवाच्यत्वाभावो वा, गुणशब्दप्रवृत्तिनिमित्तत्वाभावो वा ? न प्रथमः, पटश्चलतीति प्रत्यक्षेण पटकर्मणः पटमात्रनिष्ठत्वप्रतीतेः[१] ॥

**संयोगानां द्रव्यम् ॥२७॥**

---

१. अत्र किञ्चित् त्रुटितमिति भाति ।

संयोगौ च संयोगाश्च संयोगाः। तेषां द्रव्यं कार्यं सामान्यम्। तथा हि—किञ्चिद् द्रव्यं द्वयोः संयोगयोः कार्यम्। यथा त्रितन्तुकं किंचिद् बहूनाम्, यथा पटः। द्वितन्तुकादिकं पुनरेकेनैव संयोगेन जन्यते।

नन्वनुपपन्नमिदम्—तन्त्वादिव्यतिरिक्तानां पटादीनामवयविनामभावादिति सौगताः। तदयुक्तम्, पटाद्यवयविनां पटोऽयमिति प्रत्यक्षसिद्धत्वात्। न चात्र तन्त्वादय एवालम्बनमिति युक्तम्, परस्परासंयुक्तेषु तन्त्वादिषु पट इत्यादिप्रत्ययप्रसङ्गात्।

परस्परसंयुक्तास्तन्त्वादयः पटादिप्रत्ययालम्बनमिति चेत्–न, तन्तुवायवेमादिव्यापाराभावे यथाकथंचित् संयुक्तेषु तन्त्वादिषु पटोऽयमित्यादिप्रत्ययप्रसङ्गात्।

तन्तुवायवेमादिव्यापारसहिताः संस्थानविशेषवन्तः तन्त्वादयः पटादिप्रत्ययालम्बनमिति चेत्—न, संस्थानविशेषशब्देनावयविविवक्षायामवयविसिद्धेः। तन्त्वादिसंयोगविवक्षायां च पूर्वोक्तदोषात्।

अवयवी अवयवेषु कार्त्स्न्येन वर्तते, एकदेशेन वा? नाद्यः, द्वितीयावयवादाववयविनो विरहप्रसङ्गात्, प्रथमावयव एव सर्वस्यावयविनः परिसमाप्तत्वात्। न द्वितीयः, अवयवेषु वृत्त्यर्थमवयविनोऽवयवान्तरानङ्गीकारात्। अङ्गीकारे वा तत्रापि वृत्त्यर्थमवयवान्तरानुसरणादनवस्थानादिति चेत् –न, अवयविनोऽवयवेषु कार्त्स्न्येन वृत्तिस्वीकारात्। न चैवमवयविनः [कार्त्स्न्येनैकत्रैव वृत्तेरवयवान्तरे तदभावः स्यादिति वाच्यम्,] तत्रापि कृत्स्नस्यावयविनो विद्यमानत्वात्।

यदेकत्र कार्त्स्न्येन वर्तते तदन्यत्र न वर्तते यथा रूपमिति चेत्—न, कार्त्स्न्यंग्रहणवैयर्थ्यात्।

एकदेशेनानेकस्थूणासु वर्तमानत्वात् वंशादिव्यावृत्त्यर्थं तदिति चेत्—न, प्रतिस्थूणं कृत्स्नस्यैव वंशस्य वर्तमानत्वात्।

यदेकत्र कार्त्स्न्येन वर्तते न तदन्यत्र वर्तते इत्येतदेवात्र बाधकमिति चेत्—न, अत्रापि कृत्स्नग्रहणस्य वैयर्थ्यात्।

संयोगादिनिवृत्त्यर्थमिति चेत्–न, संयोगादेरपि प्रत्याश्रयं कृत्स्नस्यैव वृत्तेः।

तस्माद् बाधकाभावात् पटोऽयमित्यादिप्रत्यक्षमवयविनि प्रमाणमिति सिद्धम् ॥

**रूपाणां रूपम् ॥२८॥**

रूपे रूपाणि च रूपाणि। तेषामवयवगतानामवयविगतं रूपं समानं कार्यम्। उपलक्षणं चैतत् रसादीनाम्। तस्मादवयवगतानां रूपरसगन्धस्पर्शैकत्वैकपृथक्त्वमहत्त्वदीर्घत्वगुरुत्वद्रवत्वस्नेहानामवयविगतरूपरसगन्धस्पर्शैकत्वैकपृथक्त्वमहत्त्वदीर्घत्वगुरुत्वद्रवत्वस्नेहाः समानं कार्यमित्यर्थः ॥

**गुरुत्वप्रयत्नसंयोगानामुत्क्षेपणम् ॥२९॥**

यदा हि देवदत्तः प्रयत्नेन करादिना गुरुत्ववन्तं पाषाणादिकमुत्क्षिपति तदोत्क्षेपणे पाषाणादिगतं गुरुत्वं कारणम्। गुरुत्वरहितानां पवनादीनामुत्क्षेपणासंभवात् तथा देवदत्तप्रयत्नः। तदभावे उत्क्षेपणासंभवात्। तथा गुरुत्वाधारपाषाणादिदेवदत्तहस्तसंयोगः। द्वितीयादिकमुत्क्षेपणं तु प्रथमोत्क्षेपणजन्यवेगेनापि जन्यते ॥

**संयोगविभागाः कर्मणाम् ॥४०॥**

**कारणसामान्ये द्रव्यकर्मणां कर्माकारणमुक्तम् ॥३१॥**

कारणसामान्यं प्रतिपाद्यते यस्मिन् प्रकरणे तत् कारणसामान्यम्। तत्र कर्म न कर्म जनयतीत्युक्तम्

गुणवैधर्म्यान्न कर्मणाम् [ १, १. २२ ]

इति ॥

॥ इति श्रीमद्वैशेषिके दर्शने प्रथमाध्यायस्य

प्रथमाह्निकम् ॥

———०———

# प्रथमाध्यायस्य द्वितीयाह्निकम्

**कारणाभावात् कार्याभावः ॥१॥**

**न तु कार्याभावात् कारणाभावः ॥२॥**

**सामान्यं विशेष इति बुद्ध्यपेक्षम् ॥३॥**

बुद्धि प्रमाणतया अपेक्षत इति बुद्ध्यपेक्षं सामान्यं विशेष इत्येवंविधबुद्ध्यपेक्षमित्यर्थः। अयं गौरित्याद्यनुवृत्ताकारसाक्षात्कारिणी बुद्धिः सामान्ये प्रमाणम्। अयं परमाणुः गुणकर्मव्यतिरिक्ततन्मात्रनिष्ठभाववानिति साक्षात्कारिणी बुद्धिः परमेश्वरादिनिष्ठा विशेषे प्रमाणम्। किंचित् सामान्यमेव, किंचित् सामान्यविशेषः, किंचिद् विशेष एवेत्युक्तम् ॥

तत्र किं सामान्यमेवेत्यपेक्षायां, सूत्रम्—

**भावः ॥४॥**

भावो भवनं सत्तेति यावत्। यथा द्रव्यगुणकर्मस्वनुवृत्तत्वात् सत्ता सामान्यम्, तथा सामान्यविशेषसमवायेभ्यो व्यावृत्तत्वात् विशेषोऽपि। तस्मात् सामान्यविशेषः सत्ता। न तु सामान्यमेवेति। तन्न, द्रव्यगुणकर्मान्यतमव्यावृत्तत्वस्य जातिमद्व्यावृत्तत्वस्य वा विशेषत्वस्य सत्ताया असंभवात्। व्यावृत्तत्वमात्रस्य चात्र विशेषत्वेनाविवक्षितत्वात् ॥

**द्रव्यत्वं गुणत्वं कर्मत्वं सामान्यानि विशेषाश्च ॥५॥**

नन्वनुपपन्नमेतत्— नित्यत्वे सत्यनेकसमवेतत्वस्य सामान्यलक्षणत्वात्, अनेकनिष्ठत्वरहितसत्तावदन्यसमवेतस्य विशेषलक्षणत्वात्, तयोश्चैकत्रासमावेशात्। समावेशे वा अतिव्यापकत्वप्रसङ्गादिति। मैवम्, द्रव्यत्वादौ सामान्यलक्षणसत्त्वे विशेषलक्षणाभावात् विशेषपदप्रयोगस्य विशेषसादृश्यव्यावृत्त्यर्थत्वनिबन्धनत्वेन

गौणत्वात् । चकारोऽनुक्तसत्तारहितसमवायवत् पृथिवीत्वादिरूपत्वाद्युत्क्षेपणत्वादि-संग्रहार्थः ॥

यदि सत्तारहितसमवायवत् सर्वं सामान्यविशेषस्तर्हि अन्त्यविशेषा अपि सामान्यविशेषाः स्युरित्याशङ्कायां परिहारार्थं सूत्रम्—

**अन्यत्रान्त्येभ्यो विशेषेभ्यः ॥६॥**

अन्त्यविशेषव्यतिरिक्तसत्तारहितसमवायवत् सामान्यविशेष इत्यर्थः। किं पुनरन्त्यत्वं विशेषाणाम्? अन्ते भवत्वम्। उत्पत्तिविनाशयोरन्ते वर्तन्ते इत्यन्तशब्देन नित्यद्रव्याण्युच्यन्ते। तेषु भवन्तीत्यन्त्यशब्देन विशेषा उच्यन्ते इत्यात्रेयाचार्याः।

यद्वा अन्येषां विशेषाणामन्ते भवन्तीत्यन्त्याः। तथा हि— सत्तापेक्षया द्रव्यत्वं विशेषः। तदपेक्षया पृथिवीत्वादि। तदपेक्षयैकद्रव्यनिष्ठो विशेषः। तदपेक्षया विशेषान्तरं नास्ति। तत्रानुवृत्तत्वानुपपत्तेः ॥

**सन् यतो द्रव्यगुणकर्मसु सा सत्ता ॥७॥**

अस्ति द्रव्यम्, अस्ति गुणः, अस्ति कर्मेति प्रत्ययप्रयोगौ यतो विशेषणादुत्पद्येते सा सत्ता। उपलक्षणमेतत्। तेन द्रव्यमिति यतः पृथिव्यादौ तद् द्रव्यत्वम्। गुण इति यतो रूपादौ तद् गुणत्वम्। कर्मेति यदुत्क्षेपणादौ तत् कर्मत्वम्। एवं सर्वासु जातिषु।

द्रव्यव्यक्तिस्वरूपसमवायप्रमेयत्वादिभ्यो व्यतिरिक्तायाः सत्ताया न प्रमाणमिति चेत्—न, अयं घटः सन्निति प्रत्यक्षाद् घटनिष्ठसत्तासिद्धेः। न चेयमेतद्घटस्वरूपमेव, एतन्निष्ठत्वात्, घटान्तरेऽपि सत्ताभावाच्च। न चेयं द्रव्यं गुणः कर्म वा गुणवृत्तित्वात्। नापि विशेषः, कार्यवृत्तित्वात्। न समवायः, असंबन्धत्वात्। नाभावः, रूपादाविव सत्ताया निषेधत्वाभावस्य प्रत्यक्षत्वात्। ततः परिशेषाज्जातिरेव।

ननु तथापि न ब्राह्मणत्वसिद्धिः; क्षत्रियादिव्यावृत्तदेवदत्तादिनिष्ठब्राह्मणत्वस्य प्रत्यक्षेणाननुभवात्। आकारत एवायं मया ब्राह्मण इति ज्ञात इति ब्राह्मणत्वज्ञानमनुव्यवस्यत इति चेत्–न तस्याप्यसिद्धेः। क्षत्रियादिव्यावृत्ताकारस्यासिद्धावाकारत इत्यस्यासिद्धेः। ब्राह्मणलक्षणावगमसहितेन चक्षुरादिना तदवगम इति चेत्—न,

तदभावात्। ब्राह्मणमातापितृजन्यत्वस्य तत्संयोगविभागादावपि व्यापकत्वात्। ब्राह्मणमातापितृजन्यशरीरत्वस्यापि कृतसूकरादावतिव्यापकत्वात्। तज्जन्यमनुष्यत्वस्य सर्गादिजातब्राह्मणेष्वव्यापकत्वात्। कलशसंभूतागस्त्यादौ क्षत्रियसंभूतविश्वामित्रे चाव्यापकत्वात्। ब्राह्मणत्वसिद्धौ ब्राह्मणमातापितृजन्यत्वसिद्धिः। तत्सिद्धौ च ब्राह्मणत्वसिद्धिरितीतरेतराश्रयाच्च। ततो न ब्राह्मणत्वं जातिरिति।

तन्न, ब्राह्मणोऽयं ब्राह्मणोऽयमिति प्रत्यक्षादेव तत्सिद्धेः। अन्यथा गोत्वादेरपि विलयात्। एवं क्षत्रियत्वादयः समर्थनीयाः॥

**द्रव्यगुणकर्मभ्योऽर्थान्तरं सत्ता ॥८॥**

गुणवृत्तित्वात् कर्मवृत्तित्वाच्च एकद्रव्यवृत्तित्वान्न द्रव्यम्। द्विविधं द्रव्यमेकद्रव्यमनेकद्रव्यं च। तत्रैकद्रव्यं द्रव्यत्वावान्तरजातिरहितमाकाशादि, एकैकत्वात्। अनेकद्रव्यं द्रव्यत्वावान्तरजातियुक्तम् पृथिव्यादि, तद्व्यक्तीनामनेकत्वात्। तेनैकद्रव्यवृत्तित्वादाकाशकालदिगाश्रितत्वादित्यर्थः॥

**गुणकर्मसु च भावान्न कर्म न गुणश्च ॥९॥**

द्रव्यत्वगुणत्वकर्मत्वानां द्रव्यगुणकर्मभ्योऽर्थान्तर[त्व]प्रतिपादनार्थं षट्सूत्री–

**[अनेक]द्रव्यवत्त्वेन द्रव्यत्वमुक्तम् ॥१०॥**

**सामान्यविशेषाभावेन च ॥११॥**

**[तथा गुणेषु भावाद् गुणत्वमुक्तम् ॥१२॥**

**सामान्यविशेषाभावेन च ॥१३॥]**[1]

**कर्मणि भावात् कर्मत्वमुक्तम् ॥१४॥**

**सामान्यविशेषाभावेन च ॥१५॥**

---

१. बन्धनीस्थितं सूत्रद्वयं मातृकायामनुल्लिखितमपि व्याख्यया अपेक्षितम्।

द्रव्यत्वमुक्तं गुणत्वमुक्तं कर्मत्वमुक्तमित्यत्र द्रव्यगुणकर्मभ्योऽर्थान्तरमिति शेषः। शेषं पूर्ववत् ॥

**लिङ्गाविशेषात् विशेषलिङ्गाभावाच्चैको भावः ॥१६॥**

लिङ्गं प्रमाणं सदित्यनुवृत्तप्रत्यक्षम्। तस्य सर्वत्राविशेषात् एकैव सर्वत्र सत्ता। विशेषो भेदः। प्रतिव्यक्ति सत्ताभेदग्राहिप्रमाणाभावाच्च। तदनेन सर्वव्यक्तिसमवेतत्वं व्यक्तिसर्वगतत्वं सर्वकालनिष्ठत्वं नित्यत्वं चोक्तमिति ॥

॥ इति श्रीमद्वैशेषिके दर्शने प्रथमाध्यायस्य द्वितीयाह्निकम् प्रथमोऽध्यायश्च ॥

---

# द्वितीयाध्यायस्य प्रथमाह्निकम्

**रूपरसगन्धस्पर्शवती पृथिवी ॥१॥**

**रूपरसस्पर्शवत्य आपो द्रवाः स्निग्धाः ॥२॥**

**तेजो रूपस्पर्शवत् ॥३॥**

**वायुः स्पर्शवान् ॥४॥**

सप्तम्यर्थे मतुप् न षष्ठ्यर्थे। गन्धवती गन्धाश्रय इति यावत्। पृथिवी गन्धवत्त्वेन जलादिभ्यो भिद्यते रसवत्त्वेनानलादिभ्यो रूपवत्त्वेनाकाशादिभ्यः।

तत्र रूपं द्विविधम्–भास्वरमभास्वरं च। आद्यं तेजसः। द्वितीयं द्विविधम्–स्वच्छमस्वच्छं च। आद्यमुदकस्य। द्वितीयं पृथिव्याः। तेन भास्वरत्वस्वच्छत्वरहितरूपवती पृथिवीति लक्षणम्। तदपि सप्तविधम्–शुक्लं कृष्णं नीलं हरितं पीतं लोहितं [ चित्रं ] चेति। शुक्लत्वादयो रूपत्वावान्तरजातयः। भास्वरत्वस्वच्छत्वे शुक्लत्वावान्तरजाती। न च रूपत्वे मानाभावः, रूपं रूपमित्यनुगतबुद्धेः।

रसः सप्तविधः–मधुरोऽम्लो लवणस्तिक्तः कटुः कषायश्चित्रश्चेति। मधुरो द्विविधः–अव्यक्तो व्यक्तश्चेति। आद्य उदकस्य। अव्यक्तत्वं जातिविशेषः। द्वितीयः पृथिव्याः। तेन व्यक्तरसवती पृथिवीति लक्षणम्। व्यक्तो मधुरादिभेदेन सप्तधा। चित्ररूपवत् चित्ररसो हरीतक्यादौ समर्थनीयः।

गन्धो द्विविधः सुरभिरसुरभिरिति। सुरभित्वासुरभित्वे गन्धत्वावान्तरजाती।

प्रत्यक्षस्पर्शस्त्रिविधः उष्णः शीतोऽनुष्णाशीत इति। आद्यस्तेजसः। द्वितीय उदकस्य। अनुष्णाशीतो द्विविधः–स्पर्शान्तरव्यञ्जकोऽव्यञ्जक[श्च]इति। आद्यो वायोः द्वितीयः पृथिव्या इति।

आपो द्रवाः स्निग्धा इति न युक्तम्, द्रवत्वस्नेहयोः पृथिव्यपृथिवीनिष्ठत्वेन सामान्यगुणत्वात्। सांसिद्धिकं द्रवत्वं विशेषगुण इति चेत्–न, सांसिद्धिकस्य

निर्वक्तुमशक्यत्वात्। नित्यं तदिति चेत्–न, कार्यजलद्रवत्वे तदभावात्। तेजःसंयोगाजन्यत्वं तदिति चेत्–न, तेजसा विलीनकरकादिद्रवत्वस्य तेजःसंयोगजन्यत्वात्। घृतादयो न स्वाभाविकस्नेहवन्तः, पार्थिवत्वात्। कथं तर्हि घृतादौ स्नेहव्यवहार इति चेत्–पृथिवीत्वावान्तरघृततैलवसामात्रनिष्ठजातेरिति ब्रूमः।

तेजो रूपस्पर्शवत्। तेजसो रूपं भास्वरमेवेत्याचार्याः। तन्न, अग्न्यादेररुणकपिलरूपोपलम्भात्, बाधकाभावाच्च। स्पर्शोऽप्युष्ण एव। कथं तर्हि चान्द्रे महसि तदनुपलम्भः? अभिभूतत्वात्। शैत्यप्रतीतिः कथमिति चेत्? अभिभावके [शीत]-स्पर्शस्य संयुक्तसमवायेन स्फटिके लौहित्यवत् प्रतीतेरिति।

तेजः केषाञ्चिन्मते गुरुत्ववदपि।

वायुः स्पर्शवान्। स्पर्शान्तरव्यञ्जकस्पर्शो वायोः। स्नातस्य वातस्पर्शात् शीतप्रतीतेः। त्वगिन्द्रियस्पर्शात् स्पर्शप्रतीतेः॥

**त आकाशे न विद्यन्ते ॥५॥**

ते रूपादयः॥

**सर्पिर्जतुमधूच्छिष्टानामग्निसंयोगाद् द्रवत्वमद्भिः सामान्यम् ॥६॥**

सर्पिर्जतुमधूच्छिष्टानामित्युपलक्षणम्। तैलादिद्रवत्वस्यापि तेजःसंयोगजन्यत्वात्। अग्निसंयोगग्रहणमप्युद्भूतोष्णस्पर्शतेजस उपलक्षणम्। एवं तु [सूर्य]-तेजःसंयोगादपि घृतादिद्रवत्वोपपत्तेः।

**त्रपुसीसलोहरजतसुवर्णादीनां च तैजसानामग्निसंयोगाद् द्रवत्वमद्भिः सामान्यम् ॥७॥**

अग्निसंयोगादिति वर्तमाने पुनस्तद्ग्रहणं नियमार्थम्। तेन सुवर्णादीनामग्निसंयोगादेव द्रवत्वम्। घृतादीनां तु खरतरतपनालोकादिसंयोगादपि। सुवर्णादयस्तैजसाः भास्वररूपत्वात्। आलोकवत्। नासिद्धः, अपसारितमलसुवर्णकृपाणादीनामन्धकारेऽपि भास्वररूपोपलब्धेः।

सुवर्णादि पार्थिवम्, नैमित्तिकद्रवत्वाधिकरणत्वात् घृतवदिति चेत्—न, भास्वररूपवत्त्वाभावेन सोपाधित्वात्।

नन्वेवमिन्द्रनीलादीनां भास्वररूपवत्प्रभारम्भकाणां तैजसत्वं प्राप्तम् । बाढम् । कथं तर्हीन्द्रनीलपद्मरागादीनां पार्थिवविशेषेषु भाष्यकारादिभिर्गणनमिति चेत्—नीलिमगुरुत्वाद्यधिकरणेन्द्रनीलादीनां पार्थिवत्वादित्यवेहि ॥

**विषाणी ककुद्मान् प्रान्तेवालधिः सास्नावानिति गोत्वे दृष्टं लिङ्गम् ॥८॥**

वायौ सामान्यतोदृष्टं प्रमापयितुमिच्छता तत्प्रामाण्यसिद्धयर्थं दृष्टं सूत्रकृतोच्यते । [विषाणमस्यास्तीति विषाणी । विषाणशब्देन विषाणविशेषो विवक्षितः। विषाणमात्रस्य महिष्यादिगतत्वेन गोत्वव्याभिचारात् । वालधिः पुच्छम् । प्रान्तेवालधिरित्यलुक्समासः । इतिशब्देन नखरविशेषादेः परिग्रहः । सर्वे चैते भावप्रधाना निर्देशाः । तेनायं गौर्विषाणविशेषवत्त्वात् ककुद्मत्वादित्यादि ॥

**वायोः स्पर्शश्च ॥९॥**

**न चान्येषां स्पर्श इत्यदृष्टलिङ्गो वायुः ॥१०॥**

स्पर्शश्चेति चकारोऽनुक्तगुणत्वबाह्येन्द्रियग्राह्यत्वत्वगिन्द्रियग्राह्यत्वसमुच्चयार्थः। तथा हि प्रतिपन्नस्पर्शः क्वचिदाश्रितः स्पर्शत्वात्, गुणत्वात्, त्वगिन्द्रियग्राह्यत्वात्, बहिरिन्द्रियग्राह्यत्वात्, घटस्पर्शवदिति ॥

**अद्रव्यवत्त्वाद् द्रव्यम् ॥११॥**

द्रव्यशब्देन कार्यद्रव्यमभिमतम् प्रकृतत्वात् । न कार्यद्रव्यमद्रव्यम्, [द्रव्य] सदृशम् कार्यगुणकर्मादि । अब्राह्मणवन्नञः पर्युदासवृत्तित्वात् । तदस्मिन्नस्तीत्यद्रव्यवान् । कार्याश्रय इत्यर्थः । वायुर्द्रव्यम् । कार्याश्रयत्वात् घटवत् ॥

**अद्रव्यत्वेनानित्यत्वमुक्तम् ॥१२॥**

आश्रयद्रव्यरहितत्वमद्रव्यत्वम् । गगनादीनां नित्यत्वसाधकम् । तदत्र नास्तीति नास्य नित्यत्वम् । अयं वायुर्न नित्यद्रव्यम् । आश्रितत्वात् घटवत् । उक्तमिति भगवतोलूकवेषधारिणा महादेवेनेत्यर्थः ।

**वायोर्वायुसंमूर्च्छनं नानात्वलिङ्गम् ॥१३॥**

एकस्य वायोर्वाय्वन्तरेण संयोगो वायुनानात्वं साधयति। अयं वायुर्वायुत्वदितरत्वरहितसंयोगवान् संयोगित्वात्, घटवत्।

भाष्यकारास्तु समाने वायौ भिन्नदिक्क्रिययोर्वाय्वोः संमूर्च्छनमित्यामनन्ति।

नास्ति वायुत्वमिति पूर्वपक्षं सूत्रद्वयेन रचयति—

**वायुरिति सति सन्निकर्षे प्रत्यक्षाभावाद् दृष्टं लिङ्गं न विद्यते ॥१४॥**

**सामान्यतो दृष्टाच्चाविशेषः ॥१५॥**

सत्यपीन्द्रियार्थसन्निकर्षे वायुरिति साक्षात्कारानुदयात् नापि दृष्टं लिङ्गम्। अतएव नापि सामान्यतोदृष्टमिति सूत्रद्वयार्थः।

अथ सिद्धान्तसूत्रम्—

**तस्मादागमिकम् ॥१६॥**

आगमप्रसिद्धमेव वायुत्वम्। स्पर्शविशेषमात्रनिष्ठं वायुत्वमस्तीति कणादादिवचनस्यैवागमत्वात्। न च तत्र मूलाभावः। ईश्वरप्रसादासादितकणादसाक्षात्कारस्य मूलत्वात्। ईश्वरवाक्यस्य वा तत्र मूलत्वात्। तस्य नित्यत्वेन मूलान्तरानपेक्षणात् ॥

**संज्ञाकर्म त्वस्मद्विशिष्टानां लिङ्गम् ॥१७॥**

संज्ञा कर्म विषयोऽस्येति संज्ञाकर्म, इयमस्य संज्ञेति ज्ञानम्। तदस्मद्विलक्षणानां पुरुषाणां गमकम्। इदमस्य वाचकमिति ज्ञानं वृद्धव्यवहारात् शृङ्गग्राहिकया संकेताद् वा। आद्यसृष्ट्यादौ न संभवति, वृद्धान्तराणामभावात्। ततः संकेतादेव निश्चीयते। न च सर्वथाऽव्युत्पन्नानामियमस्य संज्ञेति बोधोत्पत्तेः।

वाय्वप्रत्यक्षेऽपि संकेतग्रहणोपपत्तेर्मन्वादीनां किमतीन्द्रियार्थदर्शित्वेनेति शङ्कायां सूत्रम्—

**प्रत्यक्षपूर्वकत्वात् संज्ञाकर्मणः ॥१८॥**

अस्येयं संज्ञेश्वरस्याभिप्रेतेति ज्ञानं संज्ञाकर्म। तच्च नास्मदादीनां योगजधर्मनिरपेक्षेन्द्रियवेद्यत्वासंभवात्। नापि लिङ्गजन्यम्। सृष्टयादौ मन्वादिभिः परमेश्वराभिप्रायव्याप्तलिङ्गानवगमात्। तस्मान्महादेवप्रसादासादितयोगजधर्मसध्रीचीनमनसा वाय्वादयो वाय्वादिपदैर्बोद्धव्या इतीश्वराभिमतमिति मन्वादिभिर्निश्चीयत इति मन्वादीनां सर्वज्ञत्वसिद्धिः। अतएवास्मद्विशिष्टानामिति बहुवचनम्॥

इदानीमाकाशे सामन्यतोदृष्टं व्युत्पादयितुं परमतं तावदाह—

**निष्क्रमणं प्रवेशनमित्याकाशस्य लिङ्गम् ॥१९॥**

यदि द्वारदेशे गगनं न स्यात् कुड्यादिदेश इव द्वारदेशेऽपि देवदत्तादेर्निष्क्रमणं प्रवेशनं च न स्यात्। अस्ति च तत्। तस्मादाकाशमनुमीयते इति॥

तद्दूषयति—

**तदलिङ्गमेकद्रव्यत्वात् कर्मणः ॥२०॥**

न तावद्देवदत्तनिष्क्रमणप्रवेशने गगनं समवायितयानुमापयतः। विमतं समवायिकारणजन्यम्। भावकार्यत्वादित्यस्य देवदत्तेन सिद्धसाधनत्वात्। तदतिरिक्तसमवायिजन्यत्वसाधने बाधात्। बाधनेऽपि विमतं एकद्रव्याश्रितं कर्मत्वात् सम्मतवादित्यनुमानाच्च॥

असमवायितया तर्हि गगनमनुमापयत इत्यत आह—

**कारणान्तरानुक्लृप्तिवैधर्म्याच्च ॥२१॥**

कारणान्तरस्य प्रस्तावादसमवायिकारणस्यानुक्लृप्तिवैधर्म्यादनुमितिवैधर्म्यम्। विमतं गुणासमवायिकारणकं कर्मत्वात् संमतवदित्यनुमानात्। गगनस्यासमवायितया नानुमानम्॥

अस्तु तर्हि निमित्ततया गगनानुमानम्। अत आह—

**संयोगादभावः कर्मणः ॥२२॥**

मूर्तकुड्यादिसंयोगादभावोऽनुत्पत्तिः कर्मणः। तस्मान्मूर्तद्रव्यसंयोगस्य कर्मप्रतिबन्धकत्वं तदभावस्य कर्मकारणत्वमिति तात्पर्यम् ।

गगनगोचरं सामान्यतोदृष्टं व्युत्पादयितुमुपक्रमते—

**शब्दः स्पर्शवतामगुण इति ॥२३॥**

तत्र शब्दशब्दो लिङ्गमित्यनेनान्वीयते शब्दश्च गुणत्वादिलिङ्गाश्रयत्वाल्लिङ्गम। शब्दः क्वचिदाश्रितः गुणत्वात् कार्यत्वाच्च रूपवत् घटवत्। गुणत्वकार्यत्वे वक्ष्येते ॥

**कारणगुणपूर्वकः कार्यगुणो दृष्टः ॥२४॥**

कार्ये शङ्खादौ जायमाना रूपादयो विशेषगुणाः तदवयवगुणैरारभ्यन्ते। नैवं शङ्खादिशब्दः।

**कार्यान्तराप्रादुर्भावात् ॥२५॥**

कार्यान्तरे रूपादौ शब्दस्यानुत्पत्तेः, शङ्खादावपि शब्दो न जायत इत्यर्थः। शङ्खादयो न शब्दवन्तः कार्यत्वाद् घटवत् ॥

**शब्दः स्पर्शवतामगुणः ॥२६।,**

स्पर्शवन्तो न शब्दवन्तः स्पर्शवत्त्वात् घटवत्। यद् वा शब्दो न स्पर्शवद्गुण इति प्रतिज्ञा।

तत्र तर्कहेतुप्रदर्शनार्थं सूत्रद्वयम्—

**परत्र समवायात् ॥२७॥**

**प्रत्यक्षत्वाच्च ॥२८॥**

प्रत्यक्षत्वं श्रोत्रग्राह्यत्वम्, अन्यथा रूपादौ व्यभिचारात्। शब्दो न स्पर्शवद्गुणः श्रोत्रग्राह्यत्वात् शब्दत्ववत्। अत्र तर्कः परत्र समवायादिति। परत्रेति कर्णशष्कुलीदूरस्थे शङ्खादौ समवायादित्यर्थः। परत्र समवायादित्यत्र श्रोत्रग्राह्यत्वाभावप्रसङ्गादिति शेषः। स्पर्शवद्गुणत्वे शब्दस्य कर्णशष्कुल्यवच्छिन्नाकाशेन समवायो न स्यात्, तस्य शङ्खादिसमवेतत्वात्। नापि संयुक्तसमवायः, व्यवहित-

शङ्खादिना कर्णशष्कुल्याः संयोगायोगात् । न च संबन्धान्तरमस्ति । न चासंबद्धस्य ग्रहणं संभवति । तस्माद् यद्ययं श्रोत्रेण न संबद्धस्तर्हि तेन न गृह्येतेति तर्कः । प्रत्यक्षत्वाच्च ॥

## न [ दिक् ] कालात्मगुणो न मनसो गुणः ॥२६॥

शब्दो न दिक्कालात्ममनोगुणः, श्रोत्रग्राह्यत्वात् शब्दत्ववत् । आत्मा न शब्दवान् अस्मत्प्रत्यक्षत्वात्, रूपवत् । पृथिव्युदकतेजोवायुदिक्कालमनांसि न शब्दवन्ति अश्रौत्रत्वात् शङ्खवत् । नायमसिद्धः । न श्रौत्रं कार्यत्वात् घटवत् । नित्यपृथिव्यादयो न श्रौत्रम्, स्पर्शवत्त्वाद्, घटवत् । दिक्कालमनांसि न श्रौत्रम् विशेषगुणरहितत्वात्, रूपवत् । आत्मा न श्रौत्रम्, अस्मन्मानसप्रत्यक्षत्वात् सुखवदिति तत्सिद्धेः । अयं शब्दसाक्षात्कार इन्द्रियजन्यः, कार्यसाक्षात्कारत्वात् रूपसाक्षात्कारवत् इति श्रोत्रसिद्धिः । शब्दसाक्षात्कारजनकेन्द्रियस्य श्रोत्रत्वात् । शब्दः क्वचिदाश्रितो गुणत्वात् रूपवदित्याकाशसिद्धिः ॥

तदिदमुक्तम्—

## शब्दो लिङ्गमाकाशस्य इति ॥३०॥

आकाशस्य प्रत्यक्षत्वात् किमनुमानव्युत्पादनेनेति चेत्—न, मानाभावात् । आकाशं प्रत्यक्षम्, अस्मत्प्रत्यक्षगुणवत्त्वात्, घटवदिति चेत्—न, सिद्धसाधनात् । योगीश्वरप्रत्यक्ष[व्यतिरिक्तास्मत्प्रत्य]क्षत्वं साध्यमिति, चेत्—न, मीमांसकस्य व्यावर्त्याभावेनास्मद्विशेषणवैयर्थ्यात्, भट्टानां हेत्वसिद्धेश्च ॥

## द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥३१॥

आकाशं द्रव्यं गुणवत्त्वात्, घटवत् । आकाशं नित्यमनाश्रितत्वात्, आत्मवदिति । यथा धर्मिग्राहकप्रमाणाद् वायुपरमाणूनां नित्यत्वं तथा आकाशस्यापि । एवमन्येषामपि दिक्कालादीनां द्रव्यत्वनित्यत्वे द्रष्टव्ये इति ।

## तत्त्वं भावेन ॥३१॥

तस्य भावस्तत्त्वम् । ततो भेदाभावः । भावेनेति सत्तयेत्यर्थः । व्याख्यातमित्यनुषङ्गः । अनेन सूत्रेणाकाशस्यैकत्वं प्रतिपादयता अर्थान्नित्यत्वं सर्वगतत्वं च प्रतिपादितम् ॥

॥ इति श्रीमद्वैशेषिके दर्शने द्वितीयाध्यायस्य प्रथमाह्निकम् ॥



# द्वितीयाध्यायस्य द्वितीयमाह्निकम्

**पुष्पवस्त्रयोः सति सन्निकर्षे गन्धान्तराप्रादुर्भावो वस्त्रे गन्धाभावलिङ्गम् ॥१॥**

पुष्पवस्त्रसन्निकर्षाद् वस्त्रे पुष्पगन्धविलक्षणं गन्धान्तरमुत्पद्यते, पुष्पगन्ध-सजातीयं वा। नाद्यः, तस्यानुपलम्भात्। न द्वितीयः, पुष्पगन्धव्यतिरिक्तस्य तत्सजातीयस्यानुपलम्भात्। पुष्पगन्धस्यैव पुष्पादिसंयुक्तवस्त्रविशेषणतया अवभासात्। पुष्पगन्ध एवायमित्यनुभवात्। अयं पुष्पादिगन्धः एवं जातीयत्वात् संप्रतिपन्नवत्। वस्त्रं नैवंविधगन्धवत् वस्त्रत्वात् वस्त्रान्तरवत्। न चापनीतेष्वपि पुष्पादिषु वस्त्रे तथाविधगन्धोपलम्भात् नायं पुष्पादिगन्ध इति वाच्यम्, पुष्पाद्यपनयेऽपि तदवयवानपनयात्। तदेवं निर्गन्धत्वं वस्त्रादीनामिति स्थितम् ॥

**एतेनाप्सूष्णता व्याख्याता ॥२॥**

यथा न पुष्पसंयोगाद् वस्त्रे गन्धादयः तथा न वह्निसंयोगादुदके उष्णस्पर्शः, किंतु वह्निगत एवोष्णस्पर्शस्तत्संयुक्ते जलादाववभासत इति ॥

**व्यवस्थितः पृथिव्यां गन्धः ॥३॥**

व्यवस्थितः विविधप्रकारेणावस्थितः। क्वचिदुद्भूतः, [यथा पुष्पादौ क्वचिद-नुद्भूतः], यथा घ्राणे। क्वचिदभिभूतः, यथा हिङ्गुसंबन्धेन व्यञ्जन इति ॥

**तेजःसूष्णता ॥४॥**

व्यवस्थितेति शेषः। क्वचिदुद्भूता, यथा वह्नेः। क्वचिदनुद्भूता, यथा चक्षुषः। क्वचिदभिभूता यथा सुवर्णे ॥

**अप्सु शीतता ॥५॥**

**अपरस्मिन् परं युगपदयुगपच्चिरं क्षिप्रमिति काललिङ्गानि ॥६॥**

अपरस्मिन् परमित्यत्र परस्मिन्नपरमिति पूरणीयम् । भावप्रधानो निर्देशः । तेन परत्वापरत्वयौगपद्यायौगपद्यचिरत्वक्षिप्रत्वानि काललिङ्गानीत्यर्थः । यथा परत्वापरत्वे गुणौ प्रत्यक्षौ, तथा यौगपद्यादयोऽपि गुणाः प्रत्यक्षाः । न तावद् यौगपद्यादयो द्रव्याणि, नवातिरिक्तत्वात् । नापि कर्माणि, प्रत्यक्षेणैव तेषां कर्मत्वनिषेधात् । संयोगविभागाजनकत्वाच्च । न सामान्यविशेषसमवायाः, कार्यत्वात् । नाभावः परत्वादिवद् भावत्वानुभवात् । यौगपद्यमेककालता, अयौगपद्यं भिन्नकालता इत्यादि कालविशेषा एव यौगपद्यायौगपद्यादय इति चेत्–न, कालस्यैक्यात्, तेषां चानेकत्वात् ।

ननु कालशब्देन कालोपाधयः सूर्यगत्यादय उच्यन्ते । अतो यौगपद्यमेककालतेत्येकसूर्यगत्यवच्छिन्नता, भिन्नसूर्यगत्यवच्छिन्नत्वमयौगपद्यमित्यादीति चेत्–न, सूर्यगतीनां सूर्यनिष्ठत्वात् यौगपद्यादीनां देवदत्तनिष्ठत्वात्, तस्माद् यौगपद्यादयो गुणाः, एतेषामपरत्वेऽन्तर्भावः । एतैः कालोऽनुमीयते ॥

यद्येकः कालः, कथं तर्हि युगपत्कालोऽयुगपत्कालः क्षिप्रकाल इति ? तत्राह—

**कार्यविशेषेण नानात्वम् ॥७॥**

यौगपद्यादिकार्यभेदजनकतया काले नानात्वव्यवहार इत्यर्थः । अपरस्मिन् परं युगपदयुगपच्चिरं क्षिप्रमिति ॥

**नित्येष्वभावादनित्येषु भावात् ॥८॥**

अर्थान्तरं हि नित्यं गगनादि । अनित्यं घटादि । न च तस्मिन् विषये परत्वादिप्रत्ययो जायते ॥

**कारणे कालाख्येति ॥९॥**

देवदत्तव्यतिरिक्तदेवदत्तयज्ञदत्तयौगपद्याद्यसमवायिकारणसंयोगसमवायिकारणे कालसंज्ञा । मूर्तान्यत्वे सति यौगपद्याद्यसमवायिकारणाश्रयः काल इति ॥

**इत इदमिति यतस्तद् दिशां लिङ्गम् ॥१०॥**

अस्मादिदं परम्, अपरम्, पूर्वेण, दक्षिणेनाधस्तादूर्ध्वमित्यादिप्रत्यया यतो विशेषणात् परत्वापरत्वपूर्वत्वदक्षिणत्वादेस्तद् दिशां लिङ्गम् । यथा परत्वापरत्वे

गुणौ प्रत्यक्षौ तथा पूर्वत्वदक्षिणत्वादयोऽपि, तुल्ययोगक्षेमत्वात् । न च पूर्वादिप्रत्ययेषु मेरुं प्रदक्षिणयतः सूर्यस्य प्रथमचरमादिसंयोगा एव विशेषणमिति युक्तम् । मेरुसूर्यौ प्रथमसंयोगाश्रयतया दिशमनुमापयतः ॥

विमते घटपरत्वापरत्वे अन्यघटविभुद्रव्यसंयोगासमवायिकारणकौ घटपरत्वापरत्वात् संप्रतिपन्नवत् । प्रतिप्रत्ययं पूर्वादयो भिद्यन्ते नवेति सन्देहं निराचष्टे—

**तत्त्व[ं] भावात् ॥११॥**

यथा प्रतिप्रत्ययं सत्ता न भिद्यते तथा पूर्वादयोऽपीत्यर्थः ॥

**कार्यविशेषेण नानात्वम् ॥१२॥**

कार्यं प्रत्ययो व्यवहारश्च तयोर्विशेषेण वैलक्षण्येन नानात्वं भेदो दिशामिति शेषः ।

ननु यया दिशोदयकाले सूर्यः संयुज्यते सा प्राची पूर्वा दिक्, प्रागञ्चतीति व्याख्यानात् । यया मध्याह्नेऽवाची दक्षिणा । यया अस्तमये सा प्रतीची पश्चिमा । यया रात्रौ सोदीची । अञ्चतीति गत्या तत्कार्यसंयोगलाभात् । न चोदयकालीनदिक्सूर्यसंयोगाभावान्मध्याह्नादौ प्राच्यादिव्यवहारानुपपत्तिः । तस्याप्युपलक्षणत्वेन तद्व्यवहारसंभवात् । अन्यथातीतैः कुरुभिः कुरुक्षेत्रमितीदानीन्तनव्यवहाराभावप्रसङ्गात् ॥

तदिदमुक्तम्—

**भूतपूर्वात् ॥१३॥**

भूतो वर्तमानः । तस्मात्पूर्वोऽतीतः । तस्मात् प्राचीव्यवहार इत्युपलक्षणात् प्राचीव्यवहारोपपत्तेः ॥

तदिदमुक्तम्—

**भविष्यतः ॥१४॥**

तदेतद् दूषयति—

**आदित्यसंयोगाद् भूतपूर्वाद् भविष्यतो भूताच्च ॥१५॥**

न प्राचीप्रत्ययव्यवहाराविति शेषः। अस्ति तावदयमस्मात् पूर्वेणेत्यादि-विशिष्टे घटादिप्रत्ययः। न चायमानुमानिकः, लिङ्गाभावात्। नापि स्मृतिः, अननुभवात्। तस्मादिन्द्रियजः। न चात्र दिङ्मात्रं विषयः। अयमस्मात् पूर्वेण, अयमस्माद् दक्षिणेनेत्यादेरविशेषप्रसङ्गात्। न चात्र सूर्यदिक्संयोगविशेषो विषयः मेघादिव्यवहितसूर्यसंयोगाप्रतीतावपि अयमस्मात् पूर्वेणेति चाक्षुषप्रतिभासात्।

**एतेन दिगन्तराणि व्याख्यातानि ॥१६॥**

पूर्वदक्षिण–दक्षिणपश्चिम–पश्चिमोत्तरोत्तरपूर्वोर्ध्वाधोलक्षणानि दिगन्तराणि दिग्विशेषाः व्याख्याताः।

सन्देहः साधारणधर्मदर्शनात्, साधारणधर्मिदर्शनात्, विप्रतिपत्तेरुपलब्धेर-नुपलब्धेरसाधारणधर्मदर्शनाच्च। तत्र प्रथमं तावदाह—

**सामान्यप्रत्यक्षाद् विशेषाप्रत्यक्षाद् विशेषस्मृतेश्च संशयः ॥१७॥**

सामान्यप्रत्यक्षात् स्थाणुपुरुषसाधारणोर्ध्वत्वादिधर्मदर्शनात्। विशेषाप्रत्यक्षात् स्थाणुपुरुषव्यावर्तकशिरःपाण्यादिवक्रकोटराद्यनुपलम्भात्। विशेषस्मृतेः स्थाणु-पुरुषस्मरणात् संशयः। जायत इति शेषः। चकारोऽनुक्तसमुच्चयार्थः साधारण-धर्मानुमितिविशेषानुमित्यादीन् समुच्चिनोति। विशेषौ च विशेषाश्च विशेषाः। तेषां स्मृतेः संदेहो जायते। विशेषयोः स्मृतेर्यथा–स्थाणुर्वा पुरुषोवेति। विशेषाणां स्मृतेर्यथा–शब्दो द्रव्यं गुणः कर्म वेति॥

**दृष्टमदृष्टं च ॥१८॥**

प्रत्यक्षाप्रत्यक्षविषयत्वेन साधारणधर्मदर्शनसंदेहस्य द्वैविध्यमित्यर्थः॥

साधारणधर्मिदर्शनात् संदेहमाह—

**यथादृष्टमयथादृष्टम् ॥१९॥**

यथादृष्टम् येन विशेषणेन विशिष्टं दृष्टम्। अयथादृष्टम् अन्यविशेषणविशिष्टं दृष्टम्। संदेहं प्रसूत इति शेषः। यथा कदाचिद् देवदत्तं जटिलमुपलभ्य कदाचिच्च तं

मुण्डमुपलभ्य इदानीं प्रावृतशिरसं देवदत्तमुपलभमानस्य अयं जटिलो मुण्डो वेति संदेहः स्यात् ।

**उभयथादृष्टत्वाच्च ॥२०॥**

विप्रतिपत्तिमूलसंशयोऽयमनुमानद्वयेन वचनद्वयेन वा परस्परविरुद्धधर्मवत्तया जायते । यथा शब्दो नित्यः, शब्दोऽनित्यः ॥

उपलब्ध्यनुपलब्धिभ्यां संदेहमाह—

**विद्योपलब्धिरविद्यानुपलब्धिः ॥२१॥**

आभ्यां संशयो जायते । यथा दूराद् देशविशेषे जलमुपलभ्य प्रवृत्तस्य जललाभात्, अयं प्रदेशो जलवानिति निर्णयः । इदानीं देशविशेषे जलोपलब्धेः [परत्र] संदेहः, किमयं जलवान् नवेति । अनुपलब्धेर्यथा—दूरानुपलब्धोदकेऽपि क्वचिदुदकाभावः क्वचित् तद्भाव इति दृष्टम् । इदानीं दूरात् तटाकादावुदकानुपलब्धेः सन्देहः किमयमुदकवान् न वेति ॥

असाधारणधर्मात् सन्देहं दर्शयितुमसाधारणधर्ममुपलक्षणमाह—

**श्रोत्रग्रहणो योऽर्थः स शब्दः ॥२२॥**

श्रोत्रं ग्रहणं ग्राहकं यस्य स श्रोत्रग्रहणः । अर्थः अर्थत्वसामान्यवान् । श्रोत्रग्राह्यं शब्दलक्षणमसाधारणो धर्मः शब्दे संदेहं जनयति—किमयं द्रव्यं गुणः कर्म वेति ॥

**एकद्रव्यत्वान्न द्रव्यम् ॥२३॥**

एकद्रव्येति सामान्यवत्त्वसूचनार्थम् । सूत्रपदानि कस्यचित् सूचकानि भवन्तीति न्यायात् । शब्दो न द्रव्यम् । सामान्यवत्त्वे सति एकाश्रितत्वात्, रूपवत् ॥

**अचाक्षुषत्वाच्च प्रत्यक्षस्य शब्दो न कर्म ॥२४॥**

प्रत्यक्षत्वे तस्याचाक्षुषत्वात् रसवत् । चकारोऽनुक्तसामान्यवत्त्वसमुच्चयार्थः । शब्दो गुणः सामान्यवत्त्वे सति, अचाक्षुषत्वे सति वाह्येन्द्रियग्राह्यत्वात्, रसवत् ॥

शब्दो नित्योऽनित्यो वेति संदेहं निराकरोति—

**गुणस्य सतोऽपवर्गः कर्मभिः साधर्म्यम् ॥२५॥**

तस्माच्छब्दोऽनित्य इति सूत्रार्थः ।

अन्ये तु यदि गुणसाधर्म्याच्छब्दो गुणस्तर्हि कर्मसाधर्म्यादाशुतरविनाशित्वात् कर्म [शब्दः स्या] दिति शङ्कायां साधर्म्यसमाजातिरियमिति प्रतिपादनार्थमिदं सूत्रं व्याचक्षते ।

शब्दानित्यत्ववादिना शब्दनित्यत्वसाधनं दूषणीयम् । शब्दानित्यत्वसाधनं च समर्थनीयम् । परपक्षसाधननिराकरणपूर्वकस्वपक्षसाधनसमर्थनावधित्वाद् वादस्य । अन्यथा तत्त्वनिर्णयासिद्धेः ।

तत्राचार्यः परपक्षसाधनं निराचष्टे—

**सतो लिङ्गाभावात् ॥२६॥**

न ह्युच्चारणप्रयत्नानन्तरमुपलब्धस्य गका[रा]देरुपलब्धेः प्रागूर्ध्वं च सत्त्वे प्रमाणमस्ति । नित्यत्वं हि सदा सत्त्वम्, अविनाशित्वं वा । न चैतदुभयं गकारादौ प्रत्यक्षम् । नाप्यानुमानिकम्, तदनिरूपणात् ॥

नित्यत्वे बाधकमाह—

**नित्यवैधर्म्यात् ॥२७॥**

अस्ति हि शब्दे नित्यवैधर्म्यम्, सामान्यवत्त्वे सति अस्मद्बाह्यप्रत्यक्षत्वादिति । आकाशमचाक्षुषम्, अरूपिद्रव्यत्वात्, सर्वगतत्वात्, सर्वदा अस्पर्शवद्द्रव्यत्वात् । आत्मवत् ॥

**कारणवतो विकारात् ॥२८॥**

उत्कृष्टापकृष्टप्रयत्नादिकारणवतो विकारादुत्कर्षनिकर्षादेः । तथा हि,— केचिच्छब्दाः कुतश्चिदुत्कृष्यन्ते, केचित् कुतश्चिदपकृष्यन्ते । सुखादिवत् । न खलु नित्यमुत्कर्षनिकर्षवत् कार्यत्वात् । कार्यत्वं प्रागभावप्रतियोगित्वमुत्पत्तिमत्त्वं वा ।

तस्माच्छब्दोऽनित्य इति । शब्दः कार्यः सामान्यवत्त्वे सत्यस्मद्बाह्यप्रत्यक्षत्वात्, उत्कर्षनिकर्षवत्त्वाच्च ॥

नित्यत्वसाधनस्य प्रतिकूलतर्कपराहतिमाह—

**दोषात् ॥२९॥**

सर्वदोपलब्धिप्रसङ्गदोषात् । यदि शब्दो नित्यः स्यात् सदोपलभ्येत । योग्यत्वात् ॥

**संयोगाद् विभागाच्छब्दाच्च शब्दनिष्पत्तिः ॥३०॥**

आद्यगकारादीनां प्रयत्नताल्वोष्ठपुटसंयोगविभागजन्यत्वस्य प्रत्यक्षत्वात् । श्रूयमाणशब्दस्य शब्दजन्यत्वस्य साधितत्वात् ।

**लिङ्गाच्चानित्यः ॥३१॥**

न केवलं प्रत्क्षात्, लिङ्गाच्चानित्यः । शब्दः इति शेषः । योग्यानुपलाब्धिसहितं प्रत्यक्षं गकारस्योपब्ध्यनन्तरक्षणे ध्वंससाधकम् । अन्यथा घटादेरपि तन्न साधयेत् ॥

मीमांसकः प्रत्यवतिष्ठते—

**द्वयोस्तु प्रवृत्त्योरभावात् ॥३२॥**

तुशब्दः पक्षं व्यावर्तयति । द्वयोरुत्तममध्यमवृद्धयो र्द्वे प्रवृत्ती । तयोनरनुपपत्तेः । शब्दस्यास्थायित्व इति शेषः । अस्ति तावदुत्तमवृद्धस्य मध्यमवृद्धं प्रति शब्दप्रयोगः शब्दोच्चारणप्रवृत्तिः । सा च शब्दस्य स्थायित्वमन्तरेणानुपपन्ना । बाल्ये वृद्धव्यवहारावगतसामर्थ्यात् गोशब्दादिदानीमुच्चार्यमाणगोशब्दस्यान्यत्वे बोधकत्वानुपपत्तौ मध्यमवृद्धप्रतिपत्तिहेतुत्वासम्भवात् । अगृहीतसङ्केताद् गोशब्दात् प्रपिपत्त्यनुपपत्तेः। तथा मध्यमवृद्धस्योत्तमवृद्धोच्चारितगोशब्दश्रवणानन्तरं गवानयने प्रवृत्तिरस्ति। सापि गृहीतसङ्केतगोशब्दादुत्तमवृद्धप्रयुक्तगोशब्दभेदेऽनुपपद्यमाना तयोरेकत्वं स्थापयति॥

**संख्याभावात् ॥३३॥**

संख्यां भावयतीति संख्याभावः संख्याप्रतिपादक इत्यर्थः । छान्दसमुदाहरणम् ॥

**संप्रतिपत्तिभावाच्च ॥३४॥**

संप्रतिपत्तिः प्रत्यभिज्ञा । स एवायं गकार इत्यादिप्रत्यभिज्ञयापि वर्णात्मकशब्दस्थायित्वसिद्धिरित्यर्थः । भावग्रहणं प्रकरणसमाप्तिसूचनार्थम् ॥

अथ सिद्धान्तसूत्रम्–

**सन्दिग्धाः सति बहुत्वे ॥३५॥**

उपपन्नत्वादिति शेषः । द्वयोस्तु प्रवृत्त्योरभावादयो हेतवः शब्दस्थायित्वसाधकतयोक्ताः । स्थायित्वसाधकत्वबाधकत्वाभ्यां सन्दिग्धाः न स्थायित्वसाधकतयोद्भावनीयाः । प्रवृत्तिद्वयस्य गोशब्दस्थायित्व इव गोशब्दाशुतरविनाशित्वेऽप्युपपत्तेः । स्थिरे गवादौ गोशब्दस्य सङ्केतग्रहणमिवास्थिरेऽपि ज्वालादौ ज्वालाशब्दप्रतिपाद्यत्वम् । यथा स्थिरगोशब्दस्य गवि सङ्केतग्रहणं, तथा गोशब्दजातीयकः गोः प्रतिपादकः ॥

**संख्याभावः सामान्यवतः ॥३६॥**

इदमपि छान्दसोदाहरणम् ॥

**संप्रतिपत्तिभावाच्च ॥३७॥**

सामान्यवत इत्यनुवर्तते । प्रत्यभिज्ञापि व्यक्त्यैक्याद्, यथा स एवायं गकार इति, तथा जात्यैक्यादपि भवति यथा स एवायं देवदत्त इति, 'देवदत्तस्य' प्रतिदिनमन्यत्वेऽपि देवदत्तसामान्यात् । तस्मात् प्रत्यभिज्ञा जात्यैक्यादप्युपपद्यमाना न व्यक्त्यैक्यं साधयति ॥

॥ इति श्रीमद्वैशेषिके दर्शने द्वितीयाध्यायस्य द्वितीयाह्निकम्
द्वितीयाध्यायश्च ॥

—o—

# तृतीयाध्यायस्य प्रथमाह्निकम्

आत्मसिद्ध्यर्थं सूत्रम्—

**प्रसिद्धा इन्द्रियार्थाः ॥१॥**

इन्द्रियार्थप्रसिद्धिरिति धर्मिणि क्वचिदाश्रितत्वं साध्यम्, कार्यत्वगुणत्वादयश्च हेतव इति तात्पर्यम्। प्रयोगस्तु—प्रतीतिः क्वचिदाश्रिता, कार्यत्वात्, गुणत्वाच्च रूपवदिति। शरीरतदवयवा न प्रतीतेराश्रयाः गन्धवत्त्वाश्रयत्वात् रूपवत्त्वात्, स्पर्शवत्त्वात्, घटवत्। नेन्द्रियाणि प्रतीतेराश्रयः, करणत्वात् कुठारवत्। प्राणो न प्रतीतेराश्रयः वायुत्वात् बाह्यवायुवत् ॥

**इन्द्रियार्थप्रसिद्धिरिन्द्रियार्थेभ्यः ॥२॥**

जायत इति शेषः। यथा तन्तुभ्यः पटो जायत इत्यनुभवः सिद्धः, तथेन्द्रियार्थ-प्रसिद्धिरपि इन्द्रयार्थेभ्यो जायत इत्यनुभवः सिद्धः। कथं प्रसिद्धैराश्रयस्य शरीरा-दिभ्यो भेदसिद्धिरित्यत्रापि इदमेवोत्तरम् ॥

**इन्द्रियार्थप्रसिद्धेरिन्द्रियार्थेभ्योऽर्थान्तरस्य हेतुः ॥३॥**

प्रसिद्धचाश्रयस्येति शेषः ॥

ननु प्रसिद्धिर्भूताश्रिता कार्यत्वाद् गुणत्वाच्च घटवदित्याशङ्क्याह–

**सोऽनपदेशः ॥४॥**

व्यभिचारादिति शेषः ॥

अपि च भूतगुणोऽपि प्रसिद्धिर्भवन्ती परमाणुगुणः आकाशगुणो वा। प्रथमे दूषणमाह–

**कारणाज्ञानात् ॥५॥**

लोष्टमूलकारणपरमाणुवत् शरीरादिमूलकारणपरमाणूनामपि ज्ञानरहितत्व-साधनात्। शरीरादिमूलकारणपरमाणवो न ज्ञानवन्तः परमाणुत्वात् लोष्टमूल-कारणपरमाणुवदिति ॥

द्वितीये दूषणमाह—

**कार्याज्ञानात् ॥६॥**

शरीरादिपरमाणुकार्यं न ज्ञानवत्, कार्यत्वात् लोष्टवत्।

तृतीये दूषणमाह—

**अज्ञानाच्च ॥७॥**

भूतस्येति शेषः। आकाशं न ज्ञानवत्, भूतत्वात् घटवत् ॥

ननु प्रसिद्धिः किमात्मनोऽनन्या, अन्या वा ? आद्ये नात्मनो लिङ्गमित्याह्—

**अन्य एव हेतुरित्यनपदेशः ॥८॥**

लोकेऽन्यदेव लिङ्गं लिङ्गिनो दृष्टम्, यथा धूमोऽग्नेः। अन्यथा लिङ्गग्रहण एव लिङ्गिनो निर्णयादनुमानवैयर्थ्यं स्यात् ॥

द्वितीये दूषणमाह—

**अर्थान्तरमर्थान्तरस्यानपदेशः ॥९॥**

नह्यन्यदन्यस्य लिङ्गमिति सम्भवति, स्तम्भस्यापि कुम्भलिङ्गतापत्तेः। तस्मान्न प्रसिद्धिरात्मनो लिङ्गमिति ॥

समाधत्ते—

**संयोगि समवाय्येकार्थसमवायि विरोधि ॥१०॥**

**कार्यं कार्यान्तरस्य ॥११॥**

**कारणं कारणान्तरस्य ॥१२॥**

**विरोध्यभूतं भूतस्य ॥१३॥**

**भूतमभूतस्य ॥१४॥**

**भूतं भूतस्य ॥१५॥**

**अभूतमभूतस्य ॥१६॥**

अपदेश इति शेषः। संयोगि यथा—धूमोऽग्नेः। समवायि यथा—शब्द आकाशस्य। एकार्थसमवायि यथा-रसो रूपस्य। विरोधि यथा-विस्फूर्जितनकुलवत्त्वं सर्पवत्त्वस्य॥

कार्यं कार्यान्तरस्य यथा-चन्द्रोदयकार्यं कुमुदविकासकार्यस्य॥

कारणं कारणान्तरस्य यथा शरीरकारणं चरणं शरीरकारणकरादेः॥

विरोध्यभूतं भूतस्य यथा-प्रतिबन्धकपवनसंयोगविरोधी वर्षकर्म अभूतमजातं [भूतस्य] जातस्य पवनसंयोगस्य॥

[अ] भूतमभूतस्य यथा-अजातं वर्षकर्म अजातस्य मेघस्येति॥

अत्र च संयोगित्वादिना व्याप्यत्वं लक्ष्यते, संयोगित्वेन लिङ्गत्वे वह्नेरपि धूमलिङ्गत्वप्रसङ्गात्। समवायित्वेन लिङ्गत्वे गगनस्यापि शब्दलिङ्गत्वापत्तेः।

**प्रसिद्धिपूर्वकत्वादपदेशस्य ॥१७॥**

व्याप्तस्य पक्षधर्मतया प्रमितिः प्रसिद्धिः। तत्पूर्वकत्वात् तत्सहकृतत्वादपदेशस्य। तदभावे न ज्ञानजनकत्वमिति शेषः। तदिदमनुमानं द्विविधम्-स्वार्थं परार्थं च। [तत्र स्वार्थम्-] पञ्चावयववाक्यनिरपेक्षमवगतव्याप्तिपक्षधर्मताविशिष्टम्। परार्थम्-प्रतिज्ञाहेतुदृष्टान्तोपनयनिगमनान्यवयवाः। अवयवत्वं चैषां वाक्यैकदेशत्वेनोपचारात्। न च प्रतिज्ञा निष्प्रयोजना। पर्वतो वह्निमानित्यस्य पर्वतो न वह्निरहितो बाधादित्येवंपरत्वात्। न च हेतुवचनस्य निष्प्रयोजनत्वं, धूमवत्त्वसाधनत्वख्यापकत्वेन सप्रयोजनत्वात्। नापि दृष्टान्तवचनस्य निष्प्रयोजनत्वम्, व्याप्तिधीजनकत्वेन सप्रयोजनत्वात्। सौगतवादिवागीश्वरादयस्तु यो धूमवानसावग्निमान् यथा महानसः धूमवांश्च पर्वतः इत्यवयवद्वयमेव प्रयोक्तव्यमित्याहुः। तदयुक्तम्-धर्मिसाध्यसाधनाद्यप्रतीतौ व्याप्तिपक्षधर्मत्वयोरवगन्तुमशक्यत्वात्।

लिङ्गमभिधाय तदभासानभिधत्ते—

**अप्रसिद्धोऽनपदेशः ॥१८॥**

**असन् सन्दिग्धश्च ॥१९॥**

असन्निति पक्षे स्वरूपतश्चेति । सन्दिग्धश्चेति । चकरात् पक्षे स्वरूपतश्च विपर्यस्ता वेदितव्याः । तदेवं सूत्रद्वयेन सर्वेऽप्यसिद्धाः संगृहीताः ।

अनुमानानन्तरं प्रत्यक्षं निरूपयति—

**आत्मेन्द्रियमनोऽर्थसन्निकर्षाद् यन्निष्पद्यते तदन्यत् ॥२०॥**

आत्मा चेन्द्रियं च मनश्चार्थश्च सन्निकर्षश्च आत्मेन्द्रियमनोऽर्थसन्निकर्षम् । तस्माद्यत् जायते तदन्यत् अनुमानाद् व्यतिरिक्तं साक्षात्कारत्वात् । तदन्यदित्यत्र तत्साधनं प्रत्यक्षमिति शेषः । अत्र चात्मा समवायिकारणम् । इन्द्रियमनःसन्निकर्षेन्द्रियार्थसन्निकर्षौ बाह्यार्थसाक्षात्कारे निमित्तकारणम् । इन्द्रियमनसी निमित्तकारणम् ॥

इन्द्रिय इत्युक्ते मन इति पृथग्ग्रहणं मनसः सत्त्वे इन्द्रियत्वे च विप्रतिपत्तिनिरासार्थम् । सन्निकर्षश्च संयोगसमवायादिरूपः ।

तद् द्विविधम्—सविकल्पकं निर्विकल्पकं चेति । विशिष्टविषयः साक्षात्कारः सविकल्पकम् । तच्च [पञ्च]विधम्—किंचिद् द्रव्यविशिष्टविषयम्, यथा दण्डी देवदत्त इत्यादि । किंचिद् गुणविशिष्टविषयम्, यथा शुक्लो घट इत्यादि । किंचित् कर्मविशिष्टविषयम्, यथा देवदत्तश्चलतीति । किंचित् सामान्यविशिष्टविषयम्, यथा गौरित्यादि । किंचिदभावविशिष्टविषयम्, यथा घटशून्यं भूतलमित्यादि ।

विशिष्टविषयत्वरहितः साक्षात्कारो निर्विकल्पकम् । यथा प्रथमं विशिष्टसाक्षात्कारजनकद्रव्यादिज्ञानम् । तत् पुनर्द्विविधम्—अभिज्ञानं प्रत्यभिज्ञानं च । पुनश्च द्विविधम्—सर्वविषयमसर्वविषयं च । आद्यमपि द्विविधम्—ऐश्वरं योगिज्ञानं च । असर्वविषयं पुनरस्मदादीनाम् ॥

स्वात्मनिरूपणानन्तरं परात्मनिरूपणार्थं सूत्रम्—

**प्रवृत्तिनिवृत्ती च प्रत्यगात्मनि दृष्टे परत्र लिङ्गम् ॥२१॥**

प्रवृत्तिनिवृत्ती च शरीरगतौ क्रियाविशेषौ, तदुत्पादकौ वा प्रयत्नविशेषौ। तौ च क्रियात्वावान्तरौ जातिविशेषौ प्रत्यत्नत्वावान्तरौ वा ? तत्र प्रथमपक्षेऽनुमानम्–परशरीरप्रवृत्तिनिवृत्ती कार्यपुंप्रवृत्तिनिवृत्तिजन्ये प्रवृत्तित्वात् निवृत्तित्वाच्च, मच्छरीरप्रवृत्तिनिवृत्तिवत्। द्वितीयेऽनुमानम् – विमते प्रवृत्तिनिवृत्ती कार्यपुंबुद्धिजन्ये प्रवृत्तिनिवृत्तित्वात् मच्छरीरप्रवृत्तिनिवृत्तिवत्। प्रत्यगात्मनि स्वस्मिन्। परत्र परात्मनि ॥

॥ इति श्रीमद्वैशेषिके दर्शने तृतीयाध्यायस्य प्रथमाह्निकम् ॥



## तृतीयाध्यायस्य द्वितीयाह्निकम्

उक्तमात्मनि साक्षात्कारजनकं मन इति। वक्ष्यति चात्मनि मनो लिङ्गमिति। तदुभयसमर्थनार्थमात्मप्रकरणमध्य एव मनः–प्रकरणमारभते—

**आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्याभावो भावश्च मनसो लिङ्गम् ॥१॥**

युगपदनेकज्ञानानुत्पत्तिरिति चेत्—न, युगपदनेकज्ञानासम्भवेऽपि युगपदनेकविषयैकज्ञानसम्भवात्। तस्मान्नायं सूत्रार्थः। अयं तु स्यात्–आत्मबाह्येन्द्रियार्थसन्निकर्षे सत्यपि ज्ञानस्य सुखसाक्षात्कारघटादिस्मरणलिङ्गादिजन्यत्वाभावो भावश्च मनसो लिङ्गमिति। प्रयोगस्तु–अयं सुखसाक्षात्कार इन्द्रियजः, साक्षात्कारत्वे सति कार्यत्वात् रूपसाक्षात्कारवत्। न च चक्षुरादिना सिद्धसाधनम्, अन्धादीनामपि सुखसाक्षात्कारदर्शनात्। एतेन मनोवैभवं प्रत्युक्तम्। मनो न विभु मूर्तत्वात् घटवत्। नन्वयमसिद्धो हेतुः, सदा विशेषगुणरहितद्रव्यत्वात् निरवयवेन्द्रियत्वात् द्रव्यानारम्भकनित्यद्रव्यत्वात् ज्ञानासमवायिकारणाधारत्वात् सदास्पर्शरहितेन्द्रियत्वात् नित्यगुणग्राहकेन्द्रियत्वात् अभूतत्वे सत्यरूपिद्रव्यत्वात् कालवत्, आकाशवत्, आत्मवदिति चेत्–न, धर्मिग्राहकप्रमाणबाधात् मनसो मूर्तत्वेनैव सिद्धेः। असिद्धावाश्रयासिद्धेः। मनः परमाणुः [अ]विभुत्वे सति नित्यद्रव्यत्वात् जलपरमाणुवत् ॥

**द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥२॥**

यथा वायोर्धर्मिग्राहकप्रमाणादिना द्रव्यत्वम्, परमाणुलक्षणस्य च वायोरनाश्रितत्वेन नित्यत्वम्, तथा मनसोऽपीति ॥

**प्रयत्नायौगपद्याज् ज्ञानायौगपद्याच्चैकं मनः ॥३॥**

यदि प्रतिशरीरमनेकानि मनांसि तर्हि युगपत् सर्वेन्द्रियमनःसंयोगसम्भवात् सर्वविषयेषु युगपदेव ज्ञानं स्यात्। तथा तद्विषयेच्छाप्रयत्नावपि युगपत् स्याताम्। न चैवम्। तस्मात् प्रतिशरीरमेकं मनः ॥

**प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तरविकाराः परात्मनि लिङ्गम् ॥४॥**

सुखादयश्च परात्मनि च स्वात्मनि च लिङ्गमिति भाष्यकाराः। प्रयोगस्तु—विप्रतिपन्नशरीरं किंचिन्निष्ठकार्यप्रयत्नविषयः, आत्मनिष्ठकार्यप्रयत्नविषयो वा। एवमुत्तरत्रापि किंचिन्निष्ठपदस्थान आत्मनिष्ठपदं प्रयोक्तव्यम्। प्राणवत्त्वात्, अपानवत्त्वात् मच्छरीरवत्। अक्षिपक्ष्मणोः संयोगहेतुः कर्म निमेषः। [ तयोः ]-विभागहेतुः कर्मोन्मेषः। प्रयोगस्तु-विप्रतिपन्नौ निमेषोन्मेषौ-किंचिन्निष्ठकार्यप्रयत्न-जन्यौ निमेषत्वात्, उन्मेषत्वात् मदीयनिमेषोन्मेषवत्। जीवनं शरीरावच्छिन्ने-नात्मना मनःसंयोगविशेषः। मनोगतिर्मनःक्रिया। इन्द्रियान्तरविकाराः आम्रादि-रूपदर्शनानन्तरं रसविशेषानुमानपूर्वको रसविशेषाभिलाषपूर्वको रसनस्य विकारो लालास्रवादिः। सुखादयो द्रव्याश्रिताः गुणत्वाद् रूपवत् इति।

**द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥५॥**

निगदव्याख्यातमेतत् ॥

आत्मनि प्रत्यक्षमनुमानं च न प्रमाणमित्याह—

**अहं यज्ञदत्त इति सन्निकर्षे प्रत्यक्षाभावाद् दृष्टं लिङ्गं न विद्यते ॥६॥**

**सामान्यतोदृष्टाच्चाविशेषः ॥७॥**

सत्यपीन्द्रियार्थसन्निकर्षे शरीरादिव्यतिरिक्तस्यात्मनोऽननुभवात्। न तावदत्र प्रत्यक्षं मानम्। नापि दृष्टमनुमानम्। स्वात्मनोऽप्रत्यक्षत्वेन तद्व्याप्तलिङ्गस्याप्य-प्रत्यक्षत्वात्। नापि सामान्यतोदृष्टम्, बुद्ध्यादयः क्वचिदाश्रिताः गुणत्वादित्यादेः यत्किंचिदाश्रितत्वेन चरितार्थस्य शरीरादिव्यतिरिक्तासाधकत्वात् ॥

यत एवात्मनि प्रत्यक्षमनुमानं वा न प्रमाणम्, अत एवागमः प्रमाणमिति शङ्कते—

**तस्मादागमिकम् ॥८॥**

अहमिति ज्ञानमिति शेषः ॥

समाधत्ते—

**अहमिति शब्दव्यतिरेकेण नागमिकम् ॥९॥**

शब्दश्रवणमन्तरेणापि जायमानत्वादहमिति ज्ञानं न शब्दजन्यम् ॥

तस्मादहमिति मानसः प्रत्यो द्रष्टरि स्वात्मनि प्रमाणमित्याक्षिपति-

**यदि च द्रष्टुः प्रत्यक्षोऽहं देवदत्तोऽहं यज्ञदत्तः ॥१०॥**

**[ संदिग्धस्तूपचारः ] ॥११॥**

यद्यहं पश्यामीति दर्शनविशिष्टव्यवहारादहं पश्यामीति द्रष्टरि विषये प्रत्यक्षत्वम्, तर्हि देवदत्तो गच्छामीति व्यवहारो नाहंप्रत्ययस्य क्रियाविशिष्टविषयत्वं साधयति, किमहं गच्छामीति व्यवहारः क्रियाविशिष्टविषयः किं वा क्रियाजनकप्रयत्नविशिष्टविषय इति संदेहात्, धातोः क्रियावाचकत्वात्, प्रत्ययस्य प्रयत्नवाचकत्वात् ॥

संदिग्ध इति च कोमलोक्तिः । वस्तुतः प्रयत्नविशिष्टविषयत्वनिर्णयादाख्यातप्रत्ययस्य प्रयत्नवाचकत्वात् प्रयत्नस्य देहधर्मत्वनिषेधात् । तुशब्दः पक्षं व्यावर्तयति ॥

**अहमिति प्रत्यगात्मनि भावात् परत्राभावादर्थान्तरप्रत्यक्षः ॥१२॥**

अहमिति प्रत्ययः प्रत्यगात्मानं गृह्णाति । प्रत्ययाधारश्च प्रत्यगात्मा न शरीरम् । प्रत्ययाधार इत्युक्तम्, परत्राभावात् शरीरादावभावात् । इदं शरीरं नाहंप्रत्ययविषयः शरीरत्वात् परशरीरवत् । अन्यथा परशरीरेऽप्यहंप्रत्ययापत्तेः ॥

**ननु शरीरविशेषाद् यज्ञदत्तविष्णुमित्रयोर्ज्ञानविशेषः ॥१३॥**

सर्वथा अहंप्रत्ययगोचर आत्मा इति स्थितम् ॥

आक्षेपपूर्वमात्मनानात्वसमर्थनार्थं सूत्रम्—

**सुखदुःखज्ञाननिष्पत्त्यविशेषादैकात्म्ये न व्यवस्था ॥१४॥**

स्पष्टोऽर्थः ॥

॥ इति श्रीमद्वैशेषिके दर्शने तृतीयाध्यायस्य द्वितीयाह्निकम्

तृतीयाध्यायश्च ॥

-----o-----

# चतुर्थाध्यायस्य प्रथमाह्निकम्

व्युत्पादितं पृथिव्यादि। तद् द्विविधम्—नित्यमनित्यं च। तत्र नित्यव्युत्पादनार्थं सूत्रम्—

**सदकारणवन्नित्यम् ॥१॥**

द्विविधं पृथिव्यादि–कारणवत् तद्रहितं च। तत्र यदकारणवत् पृथिव्यादि तन्नित्यम्। तथा च प्रयोगः–पृथिव्यादिपरमाणवो नित्याः, सत्त्वे सत्यकारणवत्त्वात्। आत्मवत् ॥

आश्रयासिद्धिपरिहारार्थं सूत्रम्—

**तस्य कार्यं लिङ्गम् ॥२॥**

तस्य नित्यस्य पृथिव्यादेः कार्यं पृथिवीद्व्यणुकादि लिङ्गम् ॥

द्व्यणुकमप्यसिद्धमत आह—

**कारणाभावाद्धि कार्याभावः ॥३॥**

अस्ति हि त्र्यणुकं कार्यम्। तच्च कारणाधीनम्, कारणाभावे कार्यानुपपत्तेः। न च त्र्यणुके प्रमाणाभावः, जालसूर्यमरीचिष्वप्रत्यक्षावयवस्य पृथिव्यादेः प्रत्यक्षसिद्धत्वात्। त्रसरेणव एव परमाणवः तदवयवसाधकप्रत्यक्षाभावात्, लिङ्गाभावेन तदवयवसाधकानुमानाभावाच्चेति चेत्–न। त्रसरेणुः सावयवः कार्यद्रव्यत्वात्, महाकार्यत्वाच्च घटवत्। न चायमसिद्धः। त्रसरेणुर्महान् कार्यश्च, मच्चाक्षुषद्रव्यत्वात् घटवत्। त्रसरेणुः कार्यावयवः महाकार्यत्वात् पटवत् घटवच्च।

पार्थिवपरमाणुद्व्यणुकादिसिद्धिस्तु—पार्थिवस्त्रसरेणुः पार्थिवावयवः महापृथिवीत्वात्, घटवत्। पार्थिवत्रसरेणोरवयवः पार्थिवावयवः कार्यपृथिवीत्वात् घटवत्। एवं सलिलत्रसरेण्वादिपक्षीकरणेन सलिलद्व्यणुकादयः साधनीयाः। परमाणवोऽनित्याः स्पर्शवत्त्वात्, संयोगित्वात्, घटवदित्यादेरप्रयोजकत्वम्।

परमाणूनां सावयवत्वेनाधिकावयवपरम्परायामनवस्था। केषांचिदवयवानां निरवयवत्वे त एव परमाणवः। तथा मेरुसर्षपयोस्तुल्यप्ररिमाणत्वापात इत्यादिप्रतिकूलतर्कपराहतत्वात् ॥

न च परमाण्वादयो योग्यानुपलब्धिबाधिता इत्याह—

**अविद्या चास्मदादीनाम् ॥४॥**

अस्मदाद्ययोग्यत्वादिति शेषः॥

का पुनः पृथिव्यादीनां प्रत्यक्षग्रहणयोग्यतेत्यत आह—

**महत्यनेकद्रव्यवत्त्वाद्रूपाच्चोपलब्धिः ॥५॥**

चक्षुःस्पर्शनाभ्यामिति शेषः। अनेकद्रव्यमाश्रयो यस्य तदनेकद्रव्यम्। तद्वत्त्वात् तदारब्धत्वात्। रूपादित्यत्रोद्भूतादिति शेषः। चकार उद्भूतस्पर्शसमुच्चयार्थः। तेनानेकद्रव्यारब्धत्वादुद्भूतरूपाच्च चक्षुषा घटादिद्रव्योपलब्धिः। अनेकद्रव्यारब्धत्वादुद्भूतरूपादुद्भूतस्पर्शाच्च त्वगिन्द्रियेण घटादिद्रव्योपलब्धिः। महतीति पदं महत्त्वस्य कारणात्वख्यापनार्थम् ॥

**[अद्रव्यत्वात् परमाणावनुपलब्धिः] ॥६॥**

तत्र परमाणौ द्रव्यारब्धत्वाभावाच्चक्षुरादिनानुपलब्धिः। द्व्यणुके चानेकद्रव्यारब्धत्वाभावात् ॥

**रूपसंस्काराभावाद् वायोरनुपलब्धिः ॥६॥**

रूपस्य संस्कारोऽतिशयः उद्भूतत्वम् ॥

**एतेन रसगन्धस्पर्शेषु ज्ञानं व्याख्यातम् ॥८॥**

कथमनेकद्रव्यवत्त्वादेः प्रत्यक्षकारणत्वमत आह—

**तदभावादव्यभिचारः ॥९॥**

तस्य चाक्षुषप्रत्यक्षस्यात्मन्यभावात्—न चाक्षुषप्रत्यक्षमनेकद्रव्यारब्धत्वरूपविशेषौ व्यभिचरति ॥

**संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे कर्म च रूपिद्रव्यसमवायाच्चाक्षुषाणि ॥१०॥**

स्पार्शनानि चेति शेषः । चकारोऽनेकद्रव्यारब्धसमवायसमुच्चयार्थः ।

**अरूपिष्वचाक्षुषत्वात् ॥११॥**

संख्यादयो न चक्षुषा प्रतिभासन्ते इत्यन्वयव्यतिरेकाभ्यां रूपिद्रव्यसमुदायस्य चाक्षुषप्रत्यक्षकारणत्वम् ॥

**एतेन गुणत्वे भावे च सर्वेन्द्रियं ज्ञानं व्याख्यातम् ॥१२॥**

एतेनेति यदिन्द्रियग्राह्यं यत् तद्धर्मा अपि त[दिन्द्रियग्राह्या इति]व्युत्पादनेनेति ॥

॥ इति श्रीमद्वैशेषिके दर्शने चतुर्थाध्यायस्य प्रथमाह्निकम् ॥



# चतुर्थाध्यायस्य द्वितीयाह्निकम्

तस्य कार्यं लिङ्ग[४. १. २.]मित्युक्तम्। तच्च त्रिविधम्, शरीरमिन्द्रियं विषय इति। तत्र शरीरं चतुर्विधम्, पार्थिवमाप्यं तैजसं वायवीयं च। पार्थिवमस्मदादीनाम्। आप्यं वरुणलोके। तैजसमग्न्यादिलोके। वायवीयं वायुलोके॥

अस्मदादिशरीरं न पृथिवीमात्रसमवायिकारणकम्, किं तु पञ्चभूतसमवायिकारणकमिति केचित्। तन्निराकरणार्थं सूत्रम्—

**प्रत्यक्षाप्रत्यक्षवृत्तेरप्रत्यक्षत्वाद् वायुवनस्पतिसंयोगवत् पञ्चात्मकं न विद्यते ॥१॥**

यत् प्रत्यक्षाप्रत्यक्षसमवायिकारणकं पञ्चभूतसमवायिकारणकं वा, न तत् प्रत्यक्षम्। यथा वायुवनस्पतिसंयोगः। शरीरं च प्रत्यक्षम्। तस्मान्न प्रत्यक्षाप्रत्यक्षसमवायिकारणकम्। इदं शरीरं नोदकसमवायिकारण[क]म्, शीतस्पर्शादिरहितद्रव्यत्वात् सर्वत्राकाशवत्। इदं शरीरं नाकाशसमवायिकारण[क]म्, द्रव्यत्वाद् घटवत्।

**त्र्यात्मकमपि [न] ॥२॥**

अपिशब्दात् चतुरात्मकमपि [न]। यथा पञ्चभूतसमवायिकारणकं न भवति तथा चतुस्त्रिभूतसमवायिकारण[क]मपि न भवति॥

**आत्मसंयोगश्च प्रतिषिद्धो मिथः पञ्चानाम् ॥३॥**

मिथ इत्यत्र संयोग इति शेषः। पञ्चानां परस्परसंयोगश्च शरीर[ा] समवायिकारणत्वे प्रतिषिद्धः। प्रयोगस्तु शरीरं न पृथिव्युदकसंयोगासमवायिकारणकम्, नाप्युदकतेजःसंयोगासमवायिकारण[क]म्, नापि तेजोवायुसंयोगासमवायिकारण[क]म्, नापि [पृथि]वीगगनसंयोगाद्यसमवायिकारणकम्, नाप्यात्मपृथिव्यादिसंयोगासमवायिकारणकम्, द्रव्यत्वादाकाशवदिति॥

**अणुसंयोगस्त्वप्रतिषिद्धो मिथः पञ्चानाम् ॥४॥**

अणुसंयोगोऽनारम्भकसंयोगः पञ्चभूतानामनिषिद्ध इति। इदं शरीरं पार्थिवम्, गन्धवत्त्वात्। संप्रतिपन्नवत्। एतेन द्रव्यान्तराणामपि द्वित्रिचतुःपञ्चभूतारब्धत्वं निरस्तम्।

**तच्च शरीरं द्विविधं योनिजमयोनिजं च ॥५॥**

शुक्रशोणितसंन्निपातो योनिः। तस्माज् जातं योनिजम्। तद् द्वेधा—जरायुजमण्डजं च। आद्यं मनुष्यादीनाम्। द्वितीयं पक्ष्यादीनाम्। शुक्रशोणितनिरपेक्षम् अयोनिजं यथा देवर्षीणां मशकादीनां च ॥

अयोनिजशरीरं नास्ति कारणाभावादत आह–

**अनेकदेशपूर्वकत्वात् ॥६॥**

**धर्मविशेषात् ॥७॥**

**कार्यविशेषात् ॥८॥**

न विद्यन्ते एकदेशा अवयवा येषां तेऽनेकदेशाः परमाणवः. तत्रानेकदेशपूर्वकत्वादित्यनेन परमाणूनां परम्परया योनिजशरीरसमवायिकारणत्वमुक्तम् ॥

धर्मविशेषादिति प्रकृष्टधर्मस्य निमित्तत्वम्। अधर्मविशेषादित्यपि द्रष्टव्यं मशकादिविषयम्।

कार्यविशेषादित्यवयवसंयोगस्यासमवायिकारणत्वम्। तस्मात् नायोनिजशरीरानुपपत्तिः ॥

**समाख्याभावात् ॥९॥**

समाख्या यौगिकं नाम। यथा–अगस्त्यः कुम्भयोनिरिति। तेन समाख्यया कुम्भस्य योनेर्भावात् नायोनिजशरीरानुपपत्तिः। कुम्भस्य योनित्वमुपचारादिति नायोनित्वविरोधः ॥

कथमयोनिजस्य शरीरत्वम्, पृथिवीत्वादिना संकरप्रसङ्गेन शरीरत्वस्य जातित्वाभावे उपाधेरप्यनिरूपणात्, अत आह—

**संज्ञादिमत्त्वात् ॥१०॥**

संज्ञानं संज्ञा आदिः कारणसंयोगः तदाश्रयत्वात् । तेन ज्ञानजनकात्मसंयोगाश्रयः कार्यं शरीरमिति लक्षणमेवोपाधिः । „सुखजनकात्मसंयोश्रयः कार्यं-शरीरमित्यादीनि सकलात्मविशेषगुणोपादानेन लक्षणानि द्रष्टव्यानि ।

न्यायाचार्याः पुनरिन्द्रियाश्रयः शरीरमिति लक्षयन्ति । तदयुक्तम्, इन्द्रियावयवेष्वतिव्याप्तेः । त्वगिन्द्रियाश्रयः शरीरमित्यपि न, घटादावतिव्याप्तेः । भोगायतनं शरीरमित्यपि न, भोगायतनत्वस्य तज्जनकत्वे तत्साधनत्वे चानुपपत्तेः ॥

॥ इति श्रीमद्वैशेषिके दर्शने चतुर्थाध्यायस्य द्वितीयाह्निकम्

चतुर्थोऽध्यायश्च ॥

———

# पञ्चमाध्यायस्य प्रथमाह्निकम्

चतुर्थेऽध्याये द्रव्यपरीक्षा कृता। पञ्चमे कर्मपरीक्षा वर्तिष्यते। तत्रोत्क्षेपणा-[वक्षेपणा]कुञ्चनप्रसारणपरीक्षार्थं सूत्रम्-

**आत्मसंयोगप्रयत्नाभ्यां हस्ते कर्म ॥१॥**

उत्क्षेपणादिप्रसारणान्तेषु हस्तस्य समवायिकारणत्वमात्महस्तसंयोगस्यासमवायिकारणत्वम्। हस्तकर्म समवायिकारणजन्यम्, भावाकार्यत्वात्, घटवत्। हस्तकर्म संयोगजन्यं हस्तकर्मेति प्रत्यक्षत्वात् ॥

ननु मुसलाद्यूर्ध्वगमने हस्तसंयोगः कारणम्। तर्हि कण्डनप्रवृत्तमुसलोलूखलाभिघातानन्तरोत्पन्नमुसलोर्ध्वगमनेऽपि हस्तमुसलसंयोगः कारणं स्यान्नवा प्रकृते अपीत्यत आह–.

**अभिघातजे मुसलकर्मणि व्यतिरेकादकारणं हस्तसंयोगः ॥२॥**

व्यतिरेकः तदभावेऽपि जन्म। स च हस्तयुक्तमुसलोलूखलाभिघातात् मुसलोर्ध्वगमनादवगन्तव्यः।

**तथात्मसंयोगो हस्तकर्मणि ॥३॥**

तथात्मसंयोगो हस्तकर्मणि यथा अभिघातजे मुसलकर्मणि व्यतिरेकादकारणं हस्तसंयोगः ॥

यथा अभिघातजे मुसलकर्मणि हस्तमुसलसंयोगो न कारणम्, तथा हस्तकर्मण्यपि नात्महस्तसंयोगः कारणम् प्रमाणाभावात् ॥

कथं तर्हि मुसलसंबद्धहस्तस्योर्ध्वगमनम्? अत आह–

**मुसलाभिघाताच्च मुसलसंयोगाद्धस्ते कर्म ॥४॥**

मुसलहस्तसंयोगादसमवायिकारणान्मुसलोलूखलाभिघाताच्च निमित्तकारणात् हस्तस्योर्ध्वगमनम् ॥

**तथा आत्मकर्म हस्तसंयोगाच्च ॥५॥**

आत्मनो भोगायतनत्वात् शरीरमात्मेत्युक्तम् । तथा यथा आत्मसंयोगप्रयत्नाभ्यां हस्तकर्म तथा शरीरेऽपि । यथा वाभिघातहस्तमुसलसंयोगाभ्यां हस्तस्योत्पतनं तथा शरीरस्यापि ॥

**संयोगाभावे गुरुत्वात् पतनम् ॥६॥**

यदा तूत्पततो मुसलस्य हस्तसंयोगाभावः तदा गुरुत्वात् मुसलस्याधोगमनम् ॥

**नोदनविशेषाभावान्नोर्ध्वं न तिर्यग्गमनम् ॥७॥**

नोदनविशेष ऊर्ध्वगमनतिर्यग्गमनयोः कारणम् । तयोरभावान्नोर्ध्वतिर्यग्-गमने भवतः ॥

नोदनविशेषः किं न स्यादत आह—

**प्रयत्नविशेषान्नोदनविशेषः ॥८॥**

प्रयत्नजन्यक्रियाविशेषो नोदनविशेषमारभते । स चोर्ध्वगमनतिर्यग्गमने ॥

**नोदनविशेषादुदसनविशेषः ॥९॥**

नोदनविशेषस्योर्ध्वगमनादिकारणत्वमन्यवव्यतिरेकसहितप्रत्यक्षसिद्धं पाषाणादावुदसनमूर्ध्वगमनादि ॥

**हस्तकर्मणा दार[क]कर्म व्याख्यातम् ॥१०॥**

यथा प्रयत्नात्मसंयोगाभ्यां हस्ते कर्म तथा प्रयत्नात्मसंयो[गात्स्तनपानोन्मुखबा]लशरीरेऽपि । इष्टसाधन[ता]ज्ञानाभावादिच्छानुत्पत्तौ प्रयत्नासंभव इति चेत्—न, स्तनपानमिष्टसाधनम्, स्तनपानत्वात्, प्राक्तनवत् इतीष्टसाधनत्वानुमानात् । व्याप्तिस्मरणाभावात् कथमनुमानमिति चेत्—पूर्वजन्मानुभूतव्याप्तिस्मरणसंभवात् । दारकस्य स्तनपानादिप्रवृत्तिरिष्टोपायधीजन्या प्रवृत्तित्वात्,अस्मत्प्रवृत्तिवत् इत्यनुमानात् । प्रथमजन्मनि का वार्तेति चेत्—न, जन्मसन्ततेरनादित्वात् । अत एवात्मनोऽप्यनादित्वम् ।

शरीरकर्मणः प्रयत्नजन्यत्वे सुप्तस्य पतनं न स्यादित्यादौ आह सूत्रत्रयम्—

**प्रयत्नाभावे गुरुत्वात् सुप्तस्य पतनम् ॥११॥**

**तृणे कर्म वायुसंयोगात् ॥१२॥**

**मणिगमनं सूच्यभिसर्पणमित्यदृष्टकारितानि ॥१३॥**

प्रयत्नाभाव इति प्रत्येकमभिसंबध्यते। न ह्यस्माकं प्रयत्न एव कर्मकारणम्, गुरुत्ववेगवद्द्रव्यसंयोगादृष्टवदात्मसंयोगानामपि कारणत्वात्। मणेश्चुम्बकादेर्लोहाद्यभिमुखगमनं मणिगमनम्। सूच्यादेराकर्षकपाषाणाद्यभिमुखगमनं सूच्यभिसर्पणम्। इतिशब्दः एवंविधकर्मान्तरपरिग्रहार्थः॥

**इषावयुगपत्संयोगविशेषाः कर्मान्यत्वे हेतुः ॥१४॥**

कर्मान्यत्वं कर्मभेदः। हेतुः प्रमाणम्। धनुर्मुक्तबाणास्याप[त]नं [यावन्तो गगना]दिसंयोगाः तावन्ति कर्माणीत्युपगमनीयम्। विमतः संयोगः कर्मनाशकः कर्मजसंयोगत्वात् संमतवत्। विशेषग्रहणं तत्तत्कर्मजन्यसंयोगलाभार्थं संयोगविशेषहेतुरिवेदं प्रमाणमितिवदुपपद्यते॥

सन्तु नामानन्तकर्माणि। तानि धनुर्ज्यानोदनादेव भविष्यन्तीति कथं वेगसिद्धिः? क[थं] च द्वितीयादिकर्मणां वेगजन्यत्वम्? अत आह—

**नोदनादाद्यमिषोः कर्म तत्कर्मकारिताच्च संस्कारादुत्तरं तथोत्तरमुत्तरं च ॥१५॥**

द्वितीयादिकर्मणि न नोदनस्य कारणत्वम्। तस्मिन्ननिवृत्ते द्वितीयादिकर्मोदयादव्यवहितपूर्वक्षणवर्तिनः कारणत्वात्। तस्माद् वेगाख्यः संस्कारो हेतुः। तस्य च

कारणान्तराभावादाद्यं कर्म कारणमापतनमेको वेगः। स एवायं वेग इत्यनुभवाद्, भेदकप्रमाणाभावाच्च ॥

**संस्काराभावे गुरुत्वात् पतनम् ॥१६॥**

आपतनं द्वितीयादिकर्माणि संस्कारजन्यानि। शरस्य पतनं तु संस्काराभावात् गुरुत्वादेवेति ॥

॥ इति श्रीमद्वैशेषिके दर्शने पञ्चमाध्यायस्य प्रथमाह्निकम् ॥

—:o:—

## पञ्चमाध्यायस्य द्वितीयाह्निकम्

भूगोलक[कर्म]व्युत्पादनार्थं सूत्रम्—

**नोदनाभिघातात् संयुक्तसंयोगाच्च पृथिव्यां कर्म ॥१॥**

बलवत्पवनाभिघातात् नोदनाद् वा बलवत्पवनसंयुक्तब्रह्माण्डसंयोगाद् वा पृथिव्यां कर्म ॥

**अपां संयोगाभावे गुरुत्वात् पतनम् ॥२॥**

यन्मेघोपनीतोदकानां पतनं तत्प्रतिबन्धकपवनसंयोगाभावसन्निहितात् गुरुत्वात् ॥

**द्रवत्वात् स्यन्दनम् ॥३॥**

उच्चदेशान्निम्नदेशाभिसर्पणं स्यन्दनम्। तद् द्रवत्वादुत्पद्यते। प्रथमं स्यन्दनं द्रवत्वात्। द्वितीयादिस्यन्दनानि द्रवत्वसंस्काराभ्याम्। यथा प्रथमं पतनं गुरुत्वात्, द्वितीयादिपतनानि गुरुत्वसंस्काराभ्यामिति भाष्यकाराः। तदुक्तम्-संस्कारे प्रमाणाभावात् द्वितीयादिस्यन्दनपतनानां गुरुत्वद्रवत्वाभ्यामेवोप[पत्तिः] -...... एतेन पार्थिवघृतादिस्यन्दनमपि द्रवत्वादेवेति द्रष्टव्यम् ॥

**नाड्या वायुसंयोगादारोहणम् ॥४॥**

नाड्या कमलना[लेन जलस्योर्ध्वा]रोहणं चूषकपुरुषमुखाभिगमनं तत्प्रयत्नप्रेरितप्रतिनिवर्तमानप्राणादिपवनसंयोगात् नाडीजलसंयोगाच्च।

**नो[दनापीड]नात् संयुक्तसंयोगाच्च ॥५॥**

अपामारोहणमित्यनुवर्तते। प्रयत्नवद्धस्तादिनोदनात्, प्रयत्नवद्धस्तादिना वस्तिपीडनात् नुन्नाभिहतसंयोगाच्च जलानामूर्ध्वगमनं जायते। चकारोऽभिघातसमुच्चयार्थः। पीडनं च प्रयत्नवत्संयोगविशेषः ॥

**वृक्षाभिसर्पणमित्यदृष्टकारितानि ॥६॥**

अस्ति तावन्मूले निषिक्तानामपां सकलवृक्षाधिरोहणम् । न च तन्नोदनादिजन्यम्, नोदनाभिघातादेरभावात् । तस्माददृष्टवदात्मसंयोगजन्यमेव मण्यादिकर्मवदिति निश्चीयते । इतिशब्द एवंविधवनस्पतिगुल्मौषधितृणादिपरिग्रहार्थः । अतएवादृष्टकारितानीति बहुवचनम् ।

तेजसावष्टब्धैराप्यपरमाणुभिर्विद्युदारभ्यते इत्यत्र किं प्रमाणमत आह—

**तत्रापस्फूर्जथुर्लिङ्गम् ॥७॥**

अपस्फूर्जथुर्वज्रनिर्घोषः तटत्तटदितिशब्दः । प्रभाविशेषसहितः प्रथमः शब्दो निविडावयववज्राभिघाताद् वा, तदवयवविभागाद् वा ? उभयथा वज्रं प्रमाणम् । तच्च तेजोऽवयवोपष्टब्धोदकावयवैरारब्धः, अन्यथा प्रभाविशेषानुपपत्तेः, विद्युदाहतमनुष्यादीनां स्फोटानुपपत्तेश्च ॥

**वैदिकं च ॥८॥**

लिङ्गमित्यनुवर्तते । लिङ्गं सामर्थ्यम् ॥

**अपां संयोगा[द्विभागा]च्च स्तनयित्नुः ॥९॥**

स्तनयित्नुपदं मेघवाचकम्, मेघशब्दे प्रयुक्तमुपचारात् । तेन करकादिरूपाणामपां संयोगात्, तदवयवविभागाद् वा जायमानः शब्दो मेघ इत्युच्यते ॥

**पृथिवीकर्मणा तेजसः कर्म वायुकर्म च व्याख्यातम् ॥१०॥**

निगदार्थमेतत् ॥

**अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनमणुमनसोश्चाद्यं कर्मेत्यदृष्टकारितानि ॥११॥**

परमाणूनां सृष्ट्यादौ द्व्यणुकजनकसंयोगारम्भकं संहारे च द्व्यणुकारम्भकसंयोगविरोधिविभागारम्भकं च कर्मादृष्टकारितम् ॥

**[आत्मेन्द्रियमनोऽर्थसन्निकर्षात् सुखदुःखे] ॥१२॥**

तथा सृष्ट्यादौ शरीरेन्द्रियमनोऽर्थानां सन्निकर्षात् संयोगसमवायरूपात् सुखदुःखे भवतः। तत्रात्मनः समवायिकारणत्वम्। आत्ममनःसंयोगस्यासमवायिकारणत्वम्। इन्द्रियार्थयोरिन्द्रियार्थसन्निकर्षस्य च निमित्तकारणत्वम्। आत्मेन्द्रियसंयोगजनकमनःकर्मचिन्तायामात्मेन्द्रियमनोऽर्थसन्निकर्षजन्यसुखदुःखकारणनिरूपणप्रसङ्गोपपत्तिः। सकारणसुखदुःखोच्छेदश्च तन्निरूपणप्रयोजनम्॥

**तदनारम्भश्चात्मस्थमनसि ॥१३॥**

योगिनां मनसि सकलविषयेभ्यो निवृ[त्तावा]त्मस्थे सति तयोः सुखदुःखयोरनारम्भः। आत्मस्थमनसो बाह्येन्द्रियसंयोगाभावादङ्गनादिविषयस्मृतिसङ्कल्पयोरभावाच्चेति॥

**सशरीरस्य सुखदुःखाभावः ॥१४॥**

यद्यपी[ष्टशरीराद्युपेतो] योगी अन्नं भुङ्क्ते, पानीयं पिबति, संबध्यते च कण्टकादिभिः, तथापि न तस्य सुखदुःखे भवतः, योगजधर्मेण प्रतिबन्धात्॥

**संयोगः ॥१५॥**

य[मनियम]प्राणायामप्रत्याहारध्यानधारणासमाधिप्रकर्षजन्य आत्ममनसोर्यः संयोगविशेषः स आत्मसाक्षात्कारजनकधर्मं प्रसूते। [ततश्चात्मश्रवणादावा]दरसंभवः, यथेष्टचारिणः प्राणस्य स्थानविशेषे निरोधासिद्धेः॥

अत आह—

**कायकर्मणात्मकर्मधर्मयोरनुपपत्तिः ॥१६॥**

पूर्वसंचितधर्माधर्माभ्यां शरीरानु[प्रविष्टस्य म]नसः पूर्वशरीरादवसर्पणमभिनवशरीरोपसर्पणं भुक्तभेदान्नोदकयोश्चाभिनवशरीरसंचारादिसम्भवात् संसारानुवृत्तेर्मोक्षानुपपत्तिः॥

अत आह—

**अपसर्पणमुपसर्पणमशितपीतसंयोगाः कार्यान्तरसंयोगाश्चेत्यदृष्टकारितानि ॥१७॥**

चकारः कार्यान्तरजन्यसुखदुःखादिसमुच्चयार्थः ॥

**तदभावे संयोगाभावोऽप्रादुर्भावश्च स मोक्षः ॥१८॥**

तमोऽपि दशमद्रव्यं [गुण]क्रियावदस्तीति तत्रापि चिन्तनीयम्। यदाहुः- 'तमः खलु चलं नीलम्' इत्यादि [तद्] दूषयति-

**द्रव्यगुणकर्मनिष्पत्तिवैधर्म्यादभावस्तमः ॥१९॥**

द्रव्यं च गुणश्च कर्मनिष्पत्तिश्चेति (?) द्रव्यगुणकर्मनिष्पत्तयः। ताभ्यो वैधर्म्यमालोकनिरपेक्षचक्षुर्वेद्यत्वम्। [तस्माद्]भासस्तेजसोऽभावस्तमः। निष्पत्तिश्च सामान्य-[वि] शेषसमवायतेजोव्यतिरिक्ता भावाः (?)। निष्पत्तिर्विषयत्वात् निष्पत्तेः प्रमितित्वात्। प्रयोगस्तु-भाभावस्तमः, आलोकनिरपेक्षचक्षुर्वेद्यत्वात् संप्रतिपन्नवत् इति। तमो न भाभावः रूपित्वात् पटवदिति चेत्-न, असिद्धेः। अञ्जनपुञ्जनिभं तमोऽनुभूयत इति चेत्-न, आलोकानपेक्षचक्षुषा रूपसाक्षात्काराजननात्। अन्यथा घटकृष्णरूपादेरपि अन्धकारेऽनुभवप्रसङ्गात्।

**दिक्कालावाकाशं च क्रियावद्भ्यो वैधर्म्यान्निष्क्रियाणि ॥२०॥**

क्रियावद्भ्यो वैधर्म्यं अमूर्तत्वम्। मूर्त्तिरवच्छिन्नपरिमाणम्। अवच्छिन्न[त्वं] च परिमाणत्वावान्तरजातिः ॥

**एतेन कर्माणि गुणाश्च व्याख्याताः ॥२१॥**

अमूर्तत्वेन कर्माणि गुणाश्च गगनवत् क्रियारहिता इति ॥

ननु निष्क्रियत्वं क्रियासम्बन्धविरहः। सोऽनुपपन्नः, आकाशादिसंयुक्तघटादिसमवेतत्वेन संयुक्तसमवायादिसम्भवादत आह-

**निष्क्रियाणां समवायः कर्मभिः प्रतिषिद्धः ॥२२॥**

आकाशादीनां साक्षात्क्रियाऽसमवायो निष्क्रियशब्देनोक्त इत्यर्थः ॥

दिशः सर्वोत्पत्तिमन्निमित्तत्वव्युत्पादनार्थं सूत्रम्-

**गुणैश्च दिग् व्याख्याता ॥२३॥**

यथा गुणानां न क्रियाश्रयत्वं तथा दिशोऽपि ॥

**कारणेन कालः ॥२४॥**

पूर्वापरादिप्रत्ययकारणेन दिशा कालो निष्क्रियो व्याख्यातः ॥

**॥ इति श्रीमद्वैशेषिके दर्शने पञ्चमाध्यायस्य द्वितीयाह्निकम्**
**पञ्चमोऽध्यायश्च ॥**

---

# षष्ठाध्यायस्य प्रथमाह्निकम्

कर्मपरीक्षानन्तरं गुणपरीक्षा करिष्यते। गुणेभ्योऽभ्यर्हितत्वाददृष्टपरीक्षार्थं षष्ठाध्यायारम्भः। तत्र धर्माधर्मसाधनेषु वेदः प्रमाणम्। तत्प्रामाण्यमीश्वरप्रणीतत्वेनेति। तद्व्युत्पादनार्थं सूत्रम्—

**बुद्धिपूर्वा वाक्यकृतिर्वेदः ॥१॥**

वाक्यकृतिर्वाक्यरचनाक्रम इति यवत्। बुद्धिपूर्वा पुरुषबुद्धिजन्या। वेदवाक्यक्रमः पुरुषबुद्धिजन्यः वाक्यक्रमत्वात्, कालिदासदिवाक्यक्रमवत् ॥

अस्मदादि[भिराकलितोऽयं क्रम इत्याशङ्का] परिहारार्थं सूत्रम्–

**स वा अस्मद्बु[द्ध्यन्यो] लिङ्गमृषेः ॥ २॥**

अस्मदादिबुद्धेर्वाक्यजनकत्वस्य बाधितत्वात् तदतिरिक्तपुरुषबुद्धौ वेदवाक्य[जनकत्वमिति वेदकर्त्ता]भगवानृषिरीश्वरः ॥

**ब्राह्मणसंज्ञाकर्म सिद्धिलिङ्गम् ॥३॥**

अस्ति तावात् सर्गादावुत्पन्नेषु ब्राह्मणादिषु ब्राह्मणादिपदसंकेतकरोऽस्मदादिविलक्षणः, यस्य सर्गादौ ब्राह्मणत्वादिज्ञानं, इन्द्रियसन्निपातमात्रेण क्षत्रियादिव्यावृत्तब्राह्मणत्वाद्यनुभवात् व्यञ्जकान्तराभावाच्च। न तावदत्र संस्थानविशेषो व्यञ्ज[को ब्राह्मणत्वादेः, क्षत्रि]यादिव्यावृत्तसंस्थानविशेषस्य योग्यानुपलम्भनिरस्तत्वात्। नापि ब्राह्मणभूतमातापितृजन्यत्वम्, सर्गाद्येषु तदसंभवात्। नाप्यदृष्टविशेषाकृष्टभूतजन्यत्वम्, अदृष्टानवगमे तस्याप्यनवगमात्। तस्मादस्ति कश्चिद् भगवान् अस्मदाद्यतीन्द्रियब्राह्मणत्वादिसाक्षात्कारभाक् संकेतग्रहीता। सन्ति च केचित् तत्प्रसादासादितास्मदाद्यतीन्द्रियब्राह्मणत्वादिसाक्षात्कारभाजः संकेतग्रहीतार इति ॥

सिद्धे वेदप्रामाण्ये तत्[प्रति]पाद्यधर्मसाधनप्रतिपादनार्थमुपक्रमते–

**बुद्धिपूर्वो ददातिः ॥५॥**

लक्षणया धात्वर्थे दाने ददातिप्रयोगः। बुद्धिरास्तिक्यबुद्धिः। श्रद्धापूर्वकं दानं धर्मसाधनमित्यर्थः दानं। कंचिदुद्दिश्य त्यागः। न च यागहोमयोरतिव्याप्तिः, देवताया अचेतनत्वादिति जैमिनिप्रभृतयः। तदयुक्तम्, देवतायाश्चेतनत्वात् ॥

**तथा प्रतिग्रहः ॥५॥**

श्रद्धापूर्वकप्रतिग्रहोऽपि धर्मसाधनम् ॥

**तयोश्च क्रमो यथानितरेतराङ्गभूतानाम् ॥६॥**

तयोर्दानप्रतिग्रहयोः क्रमः कार्यकारणभावरहितानामपि रासभघटादीनामिव ॥

**आत्मगुणेष्वात्मान्तरगुणानामकारणत्वात् ॥७॥**

आत्मान्तरगुणानामीश्वरव्यतिरिक्तात्मान्तरगुणानाम्, देवदत्तनिष्ठदानधर्मो न यज्ञदत्तनिष्ठप्रतिग्रहधर्मकारणं देवदत्तधर्मत्वात् संप्रतिपन्नवत्। अतो दानप्रतिग्रहयोः कार्यकारणभावे प्रमाणाभावात् बाधकमप्यस्तीत्युक्तम् ॥

कथं तर्हि यज्ञदत्तपुत्रनिष्ठश्राद्धधर्मेण यज्ञदत्तनिष्ठप्रीतिजननम्, अत आह—

**अदुष्टभोजनात् समभिव्याहारतोऽभ्युदयः ॥८॥**

अदुष्टब्राह्मणभोजनात् तृप्तादुष्टब्राह्मणोदीरितात् पितरस्ते सुखिनो भूयासुरित्याशीर्वादात् सुखोदयः ॥

**तद् दुष्टभोजने न विद्यते ॥९॥**

तदभ्युदयकारणं दुष्टभोजने न भवति ॥

**दुष्टं हिंसायाम् ॥१०॥**

प्रवृत्तं विद्धि इति शेषः। हिंसायामित्युपलक्षणं सुवर्णस्तेयादीनाम्। दुष्टभोजने दोष एव नाभ्युदयो जायते ॥

**तददुष्टे न विद्यते ॥११॥**

स्वतोऽधिकगुणवति दानार्थं प्रवृत्तिः कार्या ॥

**तथा विरुद्धानां त्यागः ॥१२॥**

यथा दानादयः, तथा विरुद्धानामाततायिनां च त्यागो वधोऽपि धर्मसाधनम् ॥

**सम आत्मत्यागः परत्यागो वा ॥१३॥**

**विशिष्टे आत्मत्यागः ॥१४॥**

उत्कृष्टाततायिवधो न कर्तव्य एवेति ॥

॥ इति श्रीमद्वैशेषिके दर्शने षष्ठाध्यायस्य प्रथमाह्निकम् ॥

# षष्ठाध्यायस्य द्वितीयाह्निकम्

**दृष्टानां दृष्टप्रयोजनानां दृष्टाभावे प्रयोगोऽभ्युदयाय ॥१॥**

वेदेन बोध्यत इति शेषः । दृष्टप्रयोजनानामित्यत्राभावादिति शेषः । दृष्टाभाव इत्यत्र स्वर्गाद्युत्पत्तेरिति शेषः । [एवं सति] गोब्राह्मणाद्युद्देशेन त्यागः स्वर्गसाधन-धर्मसाधनं [वेदप्रमाणे]न बोध्यत इति ॥

**अभिषेचनोपवासब्रह्मचर्यगुरुकुलवासवानप्रस्थयज्ञदानप्रोक्ष-णदिङ्नक्षत्रमन्त्रकालनियमाश्चादृष्टाय ॥२॥**

[नियम इति] प्रत्येकमभिसंबध्यते। अभिषेचननियमः, उपवासनियमः, ब्रह्मचर्यनियम इत्यादि। प्रातरेव स्नातव्यमित्यभिषेचननियमः । [एकादश्यामु]पोषितव्यमित्युपवासनियम इत्यादि । गुरुरीश्वरः सर्वेषां धर्मोपदेष्टा । वनाद् वनं प्रतिष्ठत इति वानप्रस्थः । स तु तृतीयाश्रमी तस्य कर्म वानप्रस्थम् ॥

**चतुराश्रम्य[म्] ॥३॥**

[अदृष्टा]येत्यनुवर्तते ॥

**उपधाऽनुपधाश्च ॥४॥**

अदृष्टायेत्यनुषङ्गः । उपधा अधर्मसाधनम् । अनुपधा धर्मसाधनम् ॥

**भावदोष उपधा ॥५॥**

भावोऽभिसन्धिः । तेन दुष्टोऽभिसन्धिरुपधेति लक्षणम् ॥

**[यद्] इष्टरूपरसगन्धस्पर्शं प्रोक्षितमभ्युक्षितं च तच्छुचि ॥६॥**

इष्टा रूपरसगन्धस्पर्शा यत्र [त]दिष्टरूप[रसगन्धस्पर्शम् ।] प्रोक्षितं समन्त्रोदकसिक्तम् । अभ्युक्षितं च तदिति बुद्धिस्थानान्नादेः परामर्शः । तादृशमन्नमपि धर्मसाधनमित्यर्थः ॥

**अशुचि [इति] शुचिप्रतिषेधः ॥७॥**

**अर्थान्तरं च ॥८॥**

चाण्डालादिस्पृष्टमशुचीति द्वितीयसूत्रार्थः ॥

**अयतस्य शुचिभोजनादभ्युदयो न विद्यते ॥६॥**

अयतो यमरहितः ॥

**असति चाभावात् ॥१०॥**

असति शुचिभोजने यमाद् विशिष्टधर्मानुदयादुभयोर्विशिष्टधर्मे कारणत्वम् ॥

**सुखाद् रागः ॥११॥**

अनुभूयमानं सुखं तज्जातीयसुखान्तरे रागं जनयति। सोऽपि तत्साधने। यो यत् कामयते स तत्साधनमपि कामयत इति स्थितेः।

**न तृप्तेः ॥१२॥**

प्रतिबन्धकत्वादिति शेषः। भोजनसुखानुभवो न पुनर्भोजने प्रवृत्तिं जनयति, प्रतिबन्धाभावविशिष्टस्य तस्य प्रवृत्तिजनकत्वात्। सुखानुभवस्य रागकारणत्वे जातमात्रस्य स्तनपानादौ रागो न स्यात्। तस्य सुखानुभवाभावात्।

अत आह—

**अदृष्टाच्च ॥१३॥**

जातमात्रस्य जन्तोः पूर्वजन्मानुभूतसुखस्मरणं संस्कारादृष्टाभ्यां जातराग-कारणम् ॥

**एतेन द्वेषो व्याख्यातः ॥१४॥**

निगदव्याख्यातमेतत् ॥

यद्यदृष्टाद् रागद्वेषौ कथं तर्हि मनुष्यस्यान्नादौ रागः अश्वादेश्च तृणादौ रागविशेषः, अत आह—

**जातिविशेषाच्च रागविशेषः ॥२५॥**

चकरात् जातिविशेषाद् द्वेषविशेषः । अन्वयव्यतिरेकाभ्यां जातिविशेषस्यापि तद्धेतुत्वावधारणात् ॥

**ततः संयोगः ॥२६॥**

रागविशेषप्रयुक्तधर्माधर्माभ्यामपूर्वशरीरादिबन्धः ॥

**विभागश्च ॥२७॥**

धर्माधर्मक्षयादिति शेषः ॥

यदि रागादिभ्यो धर्माधर्मौ तर्हि तदुत्पादनानुपरमात् न कदाचिन्मोक्षः स्यादत आह–

**आत्मकर्मसु मोक्षो व्याख्यातः ॥२८॥**

आत्मा प्राणः । तत्कर्मसु निरूप्यमाणेषु मोक्षो व्याख्यातः । तदभावे संयोगाभावोऽप्रादुर्भावश्च स मोक्ष इति [५.२.१८] सूत्रेण सकलात्मविशेषगुणोच्छेदश्च मोक्षः, तत्रेष्टस्याप्यभावादपुमर्थत्वमपीति सम[माय]व्ययफलत्वमिति चेत्–न, सुखापेक्षया दुःखस्य प्राचुर्येण तदभावात् पुमर्थत्वोपपत्तेः ॥

॥ इति श्री मद्वैशेषिके दर्शने षष्ठाध्यस्य द्वितीयाह्निकम्
षष्ठोऽध्यायश्च ॥

———

# सप्तमाध्यायस्य प्रथमाह्निकम्

त्रिविधा शास्त्रस्य प्रवृत्तिः, उद्देशो लक्षणं परीक्षा चेति। चतुर्विधा वा, उद्देशो विभागो लक्षणं परीक्षा चेति। तत्र गुणानामुद्देशविभागौ रू[परसगन्धस्प]र्शाः संख्या [ १. १. ५ ] इत्यादिसूत्रेण प्रथमाध्याये कृतौ। लक्षणमपि द्रव्याश्रयी न गुणवान् [ १. १. १६ ] इत्यादिसूत्रेण तत्रैव कृतम्। परीक्षा[याम]प्ययं गुणोऽस्मिन्नित्येवंरूपा[यां] रूपरसगन्धस्पर्शवती पृथिवी [ २. १. १ ]त्यादिसूत्रेण द्वितीयाध्याये कृतायां, किमर्थः सप्तमोध्याय इत्याशङ्कां परिहरन् सप्तम[मध्याय]मारभते।

**उक्ता गुणाः ॥१॥**

गुणलक्षणं चोक्तमिदमेवंगुणमिदमेवंगुणमिति चोक्तम्। सत्यम्। उद्देशलक्षणविभागान्युक्तानि। परीक्षा न कृतेति तदर्थं सप्तमाध्यायारम्भः। द्वितीये गुणपरीक्षोक्तेति चेत्—न, तस्य द्रव्यलक्षणादिपरत्वात्। पृथिव्यां रूपरसगन्धस्पर्शा अनित्या एव। तत्रानित्यपृथिवीरूपादीनामाश्रयनाशात् नाशः अग्निसंयोगाच्च। घटनाशे तद्रूपादीनां नाशदर्शनात् आपाकनिक्षिप्तघटाग्निसंयोगानन्तरं श्यामादिविनाशदर्शनाच्च। तत्राप्याश्रयनाशादेव नश्यन्तीति चेत्—न, मानाभावात्। विमता रूपादयो घटनाशनाश्याः घटरूपादित्वात्, नष्टघटरूपादिवदिति चेत्—न, घटान्तरनाशनाश्यत्वसिद्धयाप्यस्य चरितार्थत्वात्। आपाकोद्धारानन्तरं स एवायं घट इति प्रत्यभिज्ञानाच्च। यदि वह्निसंयोगात् प्राचीनश्यामादयो न निवर्तन्ते, न तर्हि रक्तादीनामुद्भवः संभवति॥

**एतेन नित्येष्वप्यनित्यत्वमुक्तम् ॥२॥**

एतेनाग्निसंयोगतो रूपान्तरादिप्रादुर्भावेन पार्थिवपरमाणुरूपादीनामपि अनित्यत्वं समर्थनीयम्॥

**अप्सु तेजसि वायौ च नित्यत्वं द्रव्यनित्यत्वात् ॥३॥**

सलिलपरमाणुरूपरसस्पर्शाः, तेजःपरमाणुरूपस्पर्शौ, वायुपरमाणुस्पर्शश्च एते न नश्यन्ति परमाणूनां नित्यत्वेन रूपादिनाशहेतोराश्रयनाशस्याभावात् । अग्नि-संयोगस्तन्नाशहेतुरिति चेत्–न, सहस्रशोऽग्निसंयोगेऽपि पूर्वरूपाद्यपरावृत्तेः ॥

**अनित्येष्वनित्या द्रव्यानित्यत्वात् ॥४॥**

अनित्येषु उदकतेजोवायुषु वर्तमानरूपादयोऽप्यनित्याः आश्रयनाशस्य तन्नाशहेतोः सत्त्वात् ॥

**कारणगुणपूर्वकाः पृथिव्याम् ॥५॥**

**पाकजाश्च ॥६॥**

द्विविधा पृथिवी । कार्या नित्या च । तत्र कार्यपृथिव्यां रूपादयः कार्याः कारणगुणपूर्वकाश्च । तथाहि–पार्थिवपरमाणुरूपरसगन्धस्पर्शेभ्यः पार्थिवद्व्यणुके रूपरसगन्धस्पर्शाः । तेभ्यस्त्र्यणुके । तेभ्यश्चतुरणुके । एवमन्त्यावयविपर्यन्तम् ॥ पाकजाश्चापाकनिहितकुम्भादिरूपादीनामन्वयव्यतिरेकाभ्यामग्निसंयोगजत्वावधारणात् पार्थिवाणुरूपादीनामनित्यत्वे सत्यश्रावणत्वे सति नित्यविशेषगुणत्वेन बुद्ध्यादिवत् संयोगजत्वानुमानात् । तस्मात् क्वचित् कार्यपृथिव्यां रूपादयः कारणगुणपूर्वकाः क्वचित् पाकजाः । पार्थिवपरमाणुषु पाकजा एव ॥

आत्रेयप्रशस्तपादादयस्तु कारणगुणपूर्वकाः पृथिव्यामिति सूत्रं कार्यपृथिवी-रूपादीनां कारणगुणपूर्वकत्वप्रतिपादकम् । वह्निसंयोग[ात्पाक]जाश्चेति सूत्रं तु परमाणुपृथिवीरूपादीनां पाकजत्वप्रतिपादकमिति व्याचक्षते ॥

प्रक्रिया तु प्रथमक्षणे वह्न्यभिघातान्नोदनाद् वा आपाकनिहितकुम्भादिपरमाणुषु द्व्यणुकारम्भक[संयो]गविरोधिविभागारम्भकं कर्म । द्वितीयक्षणे द्व्यणुकारम्भक-संयोगविरोधिविभागः । तृतीयक्षणे द्व्यणुकारम्भकसंयोगनाशः । [चतुर्थक्षणे] द्व्यणुकनाशः । पञ्चमक्षणे परमाणुश्यामादीनामग्निसंयोगान्नाशः, सक्रियस्य पर-माणोराकाशादिना विभागजविभागश्च । षष्ठ[क्षणे भोग्यदृष्टापेक्षादात्माणु]संयोगाद् रक्तादीनामुत्पत्तिः परमाणोराकाशादिना पूर्वसंयोगनिवृत्तिश्च । सप्तमक्षणे परमाण्व-न्तरेण संयोगः । अष्टमक्षणे [द्व्यणु]कोत्पत्तिः । नवमक्षणे कारणगुणपूर्वकक्रमेण द्व्यणुके रूपाद्युत्पत्तिरिति ।

तदयुक्तम् । प्रमाणाभावात् , प्रत्यभिज्ञाविरोधस्योक्तत्वाच्च ॥

**अप्सु तेजसि वायौ च कारणगुणपूर्वकाः ॥७॥**

कार्योदकादौ रूपादयः कारणगुणपूर्वकाः, उदकाद्यवयवरूपादिभिरुदकाद्यवयविरूपाद्यारम्भस्य प्रत्यक्षसिद्धत्वात् पाकजा न विद्यन्ते । कार्योदकादिरूपादयो नाग्निसंयोगजाः उदकादिरूपादित्वात् उदकपरमाण्वादिरूपादिवत् । उदकपरमाण्वादिरूपादयो न पाकजाः नित्यत्वात् गगनवत् ॥

**कर्मगुणा अगुणाः ॥८॥**

द्रव्यं हि गुणानां समवायिकारणम् । न च गुणकर्मणी गुणवती अद्रव्यत्वात् । यद् गुणवत् तद् द्रव्यम् , यथा घटः । शुक्लः पट इत्यत्र शुक्लप्रत्ययस्तु द्रव्ये शुक्लगुणयोगात् , रूपे शुक्लत्वजातियोगात् । न तु रूपस्य शुक्लगुणवत्त्वात् । शुक्लो गच्छतीति प्रत्ययस्तु द्रव्ये शुक्लगुणकर्मयोगात् । न तु कर्मणः शुक्लगुणवत्त्वात् ॥

**एतेन पाकजा व्याख्याताः ॥९॥**

एतेन द्रव्यस्य गुणारम्भप्रतिपादनेन ॥

**एकद्रव्यत्वाच्च ॥१०॥**

श्यामरक्तादीनां विरोधो देशभेदेन वा कालभेदेन वा परिहार्यः । न चैषां देशभेदोऽस्ति, एकद्रव्याश्रितत्वात् । तस्मात् कालभेदेन विरोधपरिहारः । तस्मात् श्यामादिनिवृत्त्यनन्तरं श्यामादिवति समवायेन रक्तादीनामुत्पत्तिः ॥

**अणोर्महतश्चोपलब्ध्यनुपलब्धी नित्ये व्याख्याते ॥११॥**

चतुर्थाध्याये इति शेषः । अणोरनुपलब्धिः, महत उपलब्धिः । चतुर्थे हि, महत्यनेकद्रव्यत्वाद् रूपाच्चोपलब्धिः [४. १. ५] अद्रव्यत्वात् परमाणावनुपलब्धिः [४. १. ६] इति सूत्रद्वयम् ॥

**कारणबहुत्वात् कारणमहत्त्वात् प्रचयविशेषाच्च महत् ॥१२॥**

कारणबहुत्वाद् यथा– अप्रचितद्व्यणुकत्रयारब्धत्र्यणुके, तस्य कारणस्य महत्त्वाभावात् प्रचयाभावाच्च । कारणमहत्त्वाद् यथा– अप्रचिततन्तुद्वयारब्धद्वितन्तु-

कादौ, तत्र कारणबहुत्वप्रचयाभावात्। प्रचयविशेषः कारणप्रचयः। तस्माद् यथा–प्रचितत्र्यणुकद्वयारब्धकार्यद्रव्ये ; तत्र कारणबहुत्वाभावात्, कारणमहत्त्वस्य सतोऽप्यकारणत्वात्। कारणबहुत्वमहत्त्वाभ्यां महत्त्वं यथा—अप्रचिततुल्यमहत्त्वतन्तुत्रयारब्धत्रितन्तुकादौ। कारणबहुत्वप्रचयाभ्यां महत्त्वं यथा–प्रचितत्र्यणुकारब्धकार्यद्रव्ये कारणबहुत्वमहत्त्वप्रचयजन्याद् विपरीतम् ॥

**अणुमहदिति तस्मिन् विशेषभावाद् विशेषाभावाच्च ॥१३॥**

तस्मिन् प्रसिद्धामलकादौ अणुव्यवहारो महत्त्वप्रचयजन्याद् विपरीतं अणुमहदिति कार्याभावगुणयोगात् [ गगनमहत्त्वापकृष्टमहत्त्वके तस्मिन् ] महदिति व्यवहारोऽपि परमाणुपरिमाणापेक्षया उत्कर्षविशेषगुणयोगात् ॥

मुख्ये बाधकमाह—

**एककालत्वात् ॥१४॥**

अणुत्वमहत्त्वयोः विरोधपरिहारो धर्मिभेदात् कालभेदाद् वा। नात्र धर्मिभेदः, बिल्वामलकद्व्यणुकादेरेकत्वात्। नापि कालभेदः अणुमहद्व्यवहारयोरेक[कालत्वात्, एकत्र सद्भावे क]थमणुत्वमहत्त्वयोर्विरोधः ॥

अत आह,—

**दृष्टान्ताच्च ॥१५॥**

यदणु न तन्महत्, यथाणु। यन्महत् तन्नाणु, यथा आकाशमिति परस्परपरिहारेणैवोपलम्भाद् विरोध[ः] शीतोष्णस्पर्शयोरिव ॥

**अणुत्वमहत्त्वयोरणुत्वमहत्त्वाभावः कर्मगुणैर्व्याख्यातः ॥१६॥**

**[अणुत्वमहत्त्वाभ्यां कर्मगुणाश्च व्याख्याता] ॥१७॥**

अणुत्वमहत्त्वाभ्याम्। कर्मगुणा अगुणाः। गुणकर्मणी नाणुत्वमहत्त्ववती अद्रव्यत्वात्। अणुत्वमहत्त्ववत् ॥

**एतेन दीर्घत्वह्रस्वत्वयोरुपलब्ध्यनुपलब्धी नित्ये व्याख्याते ॥१८॥**

**कर्मभिः कर्माणि ॥१९॥**

**गुणैर्गुणाः ॥२०॥**

व्याख्याता इति शेषः। कर्मभिर्दृष्टान्तैर्गुणैश्च दृष्टान्तैः दीर्घत्वह्रस्वत्वयोः कर्माणि गुणाश्च व्याख्याताः। दीर्घत्वह्रस्वत्वे न कर्मवती, नापि शुक्लादिमती, अद्रव्यत्वात् कर्मवत्, शुक्लादिवच्च ॥

**एतदनित्यम् ॥२१॥**

एतदिति कार्यचतुर्विधपरिमाणाधिकरणं द्रव्यं परामृशति। ततश्चाश्रय-नाशात् कार्यचतुर्विधपरिमाणनाश इति सूत्रार्थः ॥

**नित्यं परिमण्डलम् ॥२२॥**

परमाणुपरिमाणं नित्यमविनाशि। कथमित्यत्राप्येतदेवोत्तरम्। नित्यं परिमण्डलम्। परिमण्डलमस्यास्तीति परिमण्डलं परमाणु। तेनाश्रयनाशा-भावात् परमाणुपरिमाणं नित्यम् ॥

**अविद्या च विद्यालिङ्गम् ॥२३॥**

अविद्या व्याप्तिस्मृतिः, स्मृतेरविद्यात्वात्। विद्या पक्षत्वप्रतीतिः। ह्रस्व-त्वाणुत्वयोरिति शेषः। द्वयणुकमणुत्वातिरिक्तपरिमाणवत् द्रव्यत्वात् घटवत् ॥

**विभवान्महानाकाशस्तथा चात्मा ॥२४॥**

**तदभावादणु मनः ॥२५॥**

विभवो युगपत् सर्वमूर्तद्रव्यसंयोगः। चकारोऽनुक्तदीर्घत्वादिसमुच्चयार्थः मनोऽणु, अविभुत्वे सति नित्यद्रव्यत्वादुदकपरमाणुवत् ॥

**गुणैर्दिग् व्याख्याता ॥२६॥**

सर्वगतपरममहती चेति शेषः ॥

**कारणेन कालः ॥२७॥**

परत्वापरत्वपूर्वादिप्रत्ययकारणेन दिशा कालः सर्वगतः परममहांश्च व्याख्यातः ॥

॥ इति श्रीमद्वैशेषिके दर्शने सप्तमाध्यायस्य प्रथमाह्निकम् ॥



# सप्तमाध्यायस्य द्वितीयाह्निकम्

**रूपरसगन्धस्पर्शव्यतिरेकादर्थान्तरमेकत्वम् ॥१॥**

गन्धाभावेऽप्युदकादौ रसाभावेऽपि वह्न्यादौ रूपाभावेऽपि पवनादौ स्पर्शाभावेऽप्याकाशादौ एकत्वमुपलभ्यते । तस्माद् रूपादिभ्यो भिन्नम् । एवं गुणान्तरादिभ्यः अनेकत्वस्य भेदः साधनीयः ॥

**तथा पृथक्त्वम् ॥२॥**

यथा एकत्वं रूपादिभ्यो भिद्यते तथैकपृथक्त्वमपि । समर्थिते चैकत्वैकपृथक्त्वे अनेकत्वानेकपृथक्त्वे च । तयोर्नित्यत्वानित्यत्वे । तेजसो रूपस्पर्शौ परमाणुषु नित्यौ । अन्यत्राश्रयनाशान्नश्यतः । तथैकत्वैकपृथक्त्वे । यथा च तौ कार्ये कारणगुणपूर्वकौ, तथैकत्वैकपृथक्त्वे च ॥

**एकत्वैकपृथक्त्वयोरेकत्वैकपृथक्त्वाभावोऽणुमहत्त्वाभ्यां व्याख्यातः ॥३॥**

**कर्मभिः कर्माणि ॥४॥**

**गुणैर्गुण [ाः] ॥५॥**

गतार्थानि सूत्राणि, न्यायस्य तुल्यत्वात् ॥

**निःसंख्यत्वात् कर्मगुणानां सर्वैकत्वं न विद्यते ॥६॥**

[गु]णकर्मादिकमेकमेवेति मायावेदान्तिनः । तन्न, सर्वैकत्वस्य व्याहतत्वात् । गुणकर्मादय एकत्वसंख्यारहिताः अद्रव्यत्वात् । यन्नैवं तन्नैवं यथा [घटः] ॥

**एकस्याभावाद् भाक्तं न विद्यते ॥७॥**

भाक्तममुख्यम् । सर्वव्यतिरिक्तस्यैकस्याभावात् कथं तग्दतमेकत्वं सर्वस्मिन्नारोप्येत व्यवह्रियेत वा ? अ[न्यदेव] गुणगुणिनोः क्रियातद्वतोरेकत्वपृथक्त्वे मीमांसकक्षपणकादयो वर्णयन्ति, भेदाभेदस्वीकारात् ॥

तद् दूषयति —

**कार्यकारणयोरेकत्वपृथक्त्वाभावादेक[त्वपृथक्त्वं न] विद्यते ॥८॥**

कार्यकारणयोरेकत्वपृथक्त्वे न संभवतः। एकस्यानेककार्यकारणनिष्ठत्वानुपपत्तेः। एतेन जातिव्यक्त्योरपि भेदाभेदौ निरस्तौ॥

**एतदनित्ययोर्व्याख्यातम् ॥९॥**

अनेकत्वमनेकपृथक्त्वं चानित्ययोर्वर्तमानं व्याख्यातम्। आश्रयनाशान्नश्यतीति॥

**अन्यतरकर्मज उभयकर्मजः संयोगजश्च संयोगः ॥१०॥**

अन्यतरकर्मजः क्रियावता निष्क्रियस्य, यथा– स्थाणोः श्येनेन, विभूनां च मूर्तैः। उभयकर्मजो विरुद्धक्रिययोः, यथा– मल्लयोर्मेषयोर्वा। अगृह्यमाणविशेषत्वेनोभयकर्मणोः संयोगकारणत्वात्। संयोगश्च [संयोगजो] द्वेधा। क[ा]रणसंयोगजः कारणाक[ा]रणसंयोग[ज]श्च। आद्यो यथा– तन्तुकर्मजन्यतन्त्वन्तरसंयोगात् तन्त्वन्तरसंयुक्ताकाशादिसंयोगः। द्वाभ्यां यथा– तन्त्वाकाशसंयोगाभ्यां द्वितन्तुकाकाशसंयोगः। द्वितीयस्तु हस्तकुड्यसंयोगाच्छरीरकुड्यसंयोगः। त्रिविधश्च संयोगः। चोऽवधारणे। विभूनामजः संयोगश्चतुर्थोऽस्तीति चेत्—न, मानाभावात्। विभू मिथः संयुज्येते द्रव्यत्वात् घटवदिति चेत्–न, तन्तुपटादौ व्यभिचारात्। आरभ्यारम्भकभावविरहे सतीति विशेषणीयमिति चेत्–न, हिमवद्विन्ध्यादावुत्पन्नसंयोगे नष्टपटादौ व्यभिचारात्॥

**एतेन विभागो व्याख्यातः ॥११॥**

संयोगवद् विभागोऽप्यन्यतरकर्मज उभयकर्मजो विभागजश्च। आद्यः स्थाणो[:] श्येनेन। द्वितीयो यथा मल्लयोः। कारणमात्रविभागाद् यथा वंशदलविभागाद् वंशदलाकाशादिविभागः। क[ा]रणाकारणविभागाद् यथा अङ्गुलिकुड्यविभागाद् हस्तकुड्यविभागाच्च शरीरकुड्यविभाग इति॥

**संयोगविभागयोः संयोगविभगाभावोऽणुमहत्त्वाभ्यां व्याख्यातः ॥१२ ॥**

**कर्मभिः कर्माणि ॥१३॥**

**गुणैर्गुणाः ॥१४॥**

इति सूत्रत्रयं गतार्थम् ॥

**युतसिद्धयभावात् कार्यकारणयोः संयोगविभागौ न विद्येते ॥१५॥**

युतौ संयुक्ताविति सिद्धिः युतसिद्धिः संयुक्ताविति प्रतीतिः। तदभावान्न आरभ्यारम्भकयोः संयोगौ स्याताम्। संबन्धप्रत्ययोऽस्तीति चेत्, तर्हि संबन्धः स्यात्। स तु समवायः। अयं पटो नैतत्तन्तुसंयुक्तः, तदारभ्यत्वात् तन्तुरूपवत्। संयोगाभावाच्च तद्विनाशकविभागाभावः। गुणत्वाच्च पटरूपादयो न विभागवन्तः गुणत्वात् संयोगवत्।

वाच्यवाचकयोः [संयोगः] संबन्धोऽस्तीत्यत आह—

**गुणे [ च भाष्यते ] ॥१६॥**

**[निष्क्रि]यत्वात् ॥१७॥**

न केवलं वाचको गुणः। गुणे च भाष्यते। शुक्लादौ संकेत्यते। तेन वाच्य-वाचकयोर्गुणत्वान्न संयोगविभागौ स्तः, उभयो[र्गत्याद्यभावात्] ॥

न तावत् हिमवदादिपदं दक्षिण[ा]पथोच्चारितं यावत् हिमवन्तं गच्छति। नापि हिमवदादयो दक्षिणापथोच्चारितहिमवदादि[भिः समं संयुज्य]न्ते। योग्यानुपलम्भबाधान्निष्क्रियः शब्द आकाशादयश्च। तत् कथं तेषां संयोगः ॥

उपसंहरति—

**शब्दार्थावसंबन्धौ ॥१८॥**

तस्मादिति शेषः ॥

**संयो[गिनो दण्डात् सम]वायिनो विषाणाच्च दृष्टत्वादहेतुः ॥१९॥**

दण्डी पुरुषो बलीवर्दो विषाणीत्यादौ विशिष्टप्रत्ययत्वमनैकान्तिकम्। तथा प्रत्ययाभावात् सन्देहः। संबन्धपूर्वकत्व['] प्रतिज्ञाय [हेतोर्विशि]ष्टप्रत्ययस्यो [क्तौ] सन्देहः स्यात्, संबन्धपूर्वको नवेति ॥

कथं तर्हि देवदत्तपदात् देवदत्ते धीर्न यज्ञदत्ते इत्यत आह—

**सामयिकः शब्दार्थप्रत्ययः ॥२०॥**

समयेन सिद्धः सामयिकः। समयः संकेतः। यत्पदं यत्र संकेत्यते तत् तस्य प्रयोजकम्, नान्यस्येति संकेतान्नियम इति ॥

**एकदिक्काभ्यां सन्निकृष्टविप्रकृष्टाभ्यां परमपरं च ॥२१॥**

एकस्यां दिशि पूर्वस्यां पश्चिमायां वा स्थिताभ्यां स्वशरीरापेक्षया संयुक्तसंयोगभूय[स्त्वाभू]यस्त्वसंयुक्ताभ्यां परत्वमपरत्वं च जन्यते। परापरशब्दयोर्गुणवचनयोः परः पटोऽपरः पट इति द्रव्ये प्रयोगः परापरगुणयोगात् ॥

**कारणपरत्वात् कारणापरत्वाच्च ॥२२॥**

कारणं परापरत्वयोरपेक्षाबुद्धिः। तस्याः परत्वं संयुक्तसंयोगतपनपरिस्पन्दभूयस्त्वविषयत्वम्। त[स्याः] अपरत्वं तदल्पीयस्त्वविषयत्वम्। परत्वापरत्वे न स्त इति वक्तुं न युक्तम्, परोऽयमपरोऽयमित्यनुभवात्। विप्रकृष्टत्वं परत्वं सन्निकृष्टत्वं चापरत्वम्।

कालेऽपि परः स्थविरः, अपरो युवा इति प्रत्ययः। परत्वापरत्वे गुणौ, द्रव्यकर्मान्यत्वे सति जातिमत्त्वात् रूपवत्। विमते परत्वापरत्वे देवदत्तबुद्धिजे, सत्यपीन्द्रियसन्निकर्षादौ यज्ञदत्ताचाक्षुषत्वे सति देवदत्तचाक्षुषत्वाद् द्वित्ववद्। परत्वापरत्वे मूर्तामूर्तसंयोगजन्ये, एकद्रव्यत्वेऽस्मदादिप्रत्यक्षत्वे वा आवरणाद्यनुपलब्धिकारणाभावे सति पुरुषान्तराप्रत्यक्षयोः पुरुषान्तरप्रत्यक्षत्वात् सुखादिवत् ॥

**परत्वापरत्वयोः परत्वापरत्वाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः ॥२३॥**

**कर्मभिः कर्माणि ॥२४॥**

**गुणैर्गुणाः ॥२५॥**

इति सूत्रत्रयं गतार्थम् ॥

**इहेदमिति यतः कार्यकारणयोः स समवायः ॥२६॥**

कार्यकारणग्रहणमुपलक्षणम् । कार्यकारणयोर्गुणगुणिनोः, क्रियातद्वतोः, जातिव्यक्त्योः, विशेषतद्वतो[श्च] इहेदमिति यतः स समवायः । इह तन्तुषु पट इत्यादि ॥

**द्रव्यगुणकर्मत्वप्रतिषेधो भावेन व्याख्यातः ॥२७॥**

भावः सत्ता यथा न द्रव्यं न गुणो न कर्म पूर्वोक्तहेतुभ्यः, तथा [न] समवायोऽपि । न चायं जातिविशेषाभावानामन्यतमः संबन्धत्वात् संयोगवत् । तस्मात् पदार्थान्तरं समवायः ॥

**तत्त्वं भावे[न] ॥२८॥**

तस्य भावस्तत्त्वम् । य एव तन्तुपटयोः समवायः स एव जातिव्यक्त्योः समवा[योऽ]पि । प्रयोगस्तु–जातिव्यक्त्यादिसमवायः तन्तुपटसमवायान्न भिद्यते, समवायत्वात् तन्तुपटसमवायवत् । समवायभेदसाधन[ाभा]वाच्च । तन्तुपटसमवायो भिद्यते तन्तुपटसंबन्धत्वात् तन्तुपटसंयोगवदिति चेत्—न, समवायलक्षणाभावेन सोपाधित्वा[त्] ॥

॥ इति श्रीमद्वैशेषिके दर्शने सप्तमाध्यायस्य द्वितीयाह्निकम् ।

सप्तमाध्यायश्च ॥



# अष्टमाध्यायस्य प्रथमाह्निकम्

अविद्यमानप्रतिपाद्यतया अनन्तराध्यायप्रवृत्तिवैयर्थ्याशङ्कां परिहरन् उक्तमनुवदति—

**द्रव्येषु ज्ञानं [व्याख्यातम्] ॥१॥**

[ द्रव्येषु भूम्यादिनवसु द्वितीयाध्यायव्याख्यातेष्वात्मन्यतिरिक्ते ज्ञानं तदाश्रय आ]त्मा च ॥

**ज्ञाननिर्देशे ज्ञाननिष्पत्तिरुक्ता ॥२॥**

वागादिष्वलैङ्गिकं ज्ञानमात्मन्यपरोक्षज्ञानं तृतीयाध्याये व्याख्यातम् ॥

**आत्ममनसी कारणे व्याख्याते ॥३॥**

[कारणे समवायिकारणनिमित्तकारणे व्याख्याते य]त्रेति ज्ञाननिर्देशश्चतुर्थोऽध्यायः । तत्र पृथिव्यादिपरमाणुविषयं लैङ्गिकं स्थूलपृथिव्यादिविषयमपरोक्षज्ञानं सकारणं व्याख्यातम् ॥

सं प्रत्य[वान्तरापरोक्षगुणक]र्मादिज्ञानकारणप्रतिपादनार्थमष्टमोऽध्यायः आरभ्यते ।

**गुणकर्मसु सन्निकृष्टेषु ज्ञाननिष्पत्तेर्द्रव्यं कारणम् ॥४॥**

घटादिगुणकर्मसामान्यज्ञाने चक्षुरादिसन्निकृष्टघटादेः कारणत्वं चक्षुर्घटसंयोगस्य कारणत्वे चक्षुष इव घटस्यापि कारणत्वात्, कारणकारणं च मा भूयात् । घटरूपादिज्ञाने घटस्य कारणत्वम् , संयोगेनान्यथासिद्धेः कारणकारणत्वं तु स्यात् , घटरूपादिज्ञानकारणचाक्षुषघटसंयोगकारणत्वात् ॥

द्विविधं ज्ञानं सविकल्पकं निर्विकल्पकं च । तत्र सविकल्पके कारणमाह-

**सामान्यविशेषापेक्षं द्रव्यगुणकर्मसु ॥५॥**

---

१. एतस्य सूत्रत्वं सन्दिग्धम् ।

विशिष्टं ज्ञानमिति शेषः। सामान्यापेक्षं द्रव्ये यथा, इदं सद् द्रव्यं पृथिवीत्यादि। विशेषापेक्षं द्रव्ये यथा, सामान्यजातिगुणक्रियावन्तः परमाणवो व्यावर्तकधर्मवन्त इति योगिनामपरोक्षज्ञानमस्मदादीनामानुमानिकम्। सामान्यापेक्षं गुणे यथा, इदं सद्रूपं शुक्लमिति। सामान्यापेक्षं कर्मणि यथा, इदं सत्कर्मोत्क्षेपणमिति। विशेषापेक्षं ज्ञानं गुणकर्मणोर्नास्ति, तत्रान्त्यविशेषाभावात्॥

**द्रव्ये द्रव्यगुणकर्मापेक्षम् ॥६॥**

अपरोक्षमानुमानिकं वा सविकल्पकमुत्पद्यत इति शेषः। द्रव्ये द्रव्यापेक्षं यथा, गौर्विषाणीति। गुणापेक्षं यथा, गौः शुक्ल इति। कर्मजन्यं यथा गौर्गच्छतीति॥

**गुणकर्मसु गुणकर्माभावात् गुणकर्मापेक्षं न विद्यते ॥७॥**

स्पष्टार्थम्॥

**समवायिनः श्वैत्यात् श्वैत्यबुद्धेश्च श्वेते बुद्धिस्ते कार्यकारणभूते ॥८॥**

समवायिन इति शुक्लगुणपटसंबन्धात्। श्वैत्यातिति शुक्लगुणात्। श्वैत्यबुद्धेरिति शुक्लगुणबुद्धे[:]। श्वेते शुक्लगुणविशिष्टे पटे बुद्धिर्जायते। तत्रान्यत्रापि, ते विशेषणविशेष्यबुद्धी विशेषणज्ञानविशिष्टबुद्धी च, कार्यकारणभूते अन्वयव्यतिरेकसहितप्रत्यक्षेणावसिते, विशेषणसंबन्धविशेषज्ञानेषु सत्सु विशिष्टप्रत्ययोदयादसत्सु चानुदयात्॥

ननु किं व्यतिरेकग्रहणेनान्वयादेव विशेषणज्ञानादीनां विशिष्टज्ञानकारणत्वसिद्धेरत आह—

**द्रव्येष्वनितरेतरकारणाः प्रत्ययाः ॥९॥**

**कारणायौगपद्यात् [कारणक्रमाच्च घटपटादिबुद्धीनां क्रमो न हेतुफलभावात्] ॥१०॥**

[कारणानां प्रत्यया]नामयौगपद्यात् क्रमात् क्रमेण घटपटादिप्रत्यया जायन्ते। न च तेषु पूर्वपूर्वप्रत्ययानां कारणत्वम्। तस्मान्नान्वयम[ा]त्रेण विशेषण-

ज्ञानादीनां] कारणभावसिद्धिः। तथा द्रव्यगुणकर्मसु कारणविशेषात् द्रव्यगुणकर्मस्वपि द्रव्यवत् क्रमभावि न [युगपद्भाविज्ञानम्। विशिष्टबुद्धयो] विशेषात् क्रमवत्कारणादुत्पद्यन्ते। न तेषामितरेतरकारणत्वमिति नान्वयमात्रात् कारणसिद्धिरिति व्यतिरेको [ऽप्यपेक्षितः] ॥

अर्थज्ञानं सकारणं व्युत्पादयति—

**अयं त्वया भोजयैनमिति बुद्ध्यपेक्षम् ॥११॥**

**दृष्टेषु भावाददृष्टेष्वभावात् ॥१२॥**

त्वयेत्यत्र[भोजयि]तव्य इति शेषः। अयं त्वया भोजयितव्यो भोजयैनमित्यादिवाक्येभ्यो जायमानं ज्ञानं बुद्ध्यपेक्षं पदपदार्थसंकेतज्ञानापेक्षम्। दृष्टेषु ज्ञातेषु पदपदार्थसंकेतेषु भावात् उदयात् अदृष्टेषु अज्ञातेषु अभावात् अनुदयात् ॥

॥ इति श्रीमद्वैशेषिके दर्शने अष्टमाध्यायस्य प्रथमाह्निकम् ॥



# अष्टमाध्यायस्य द्वितीयाह्निकम्

अर्थेन्द्रियव्याख्यानार्थमयमाह्निकारम्भः ।

**अर्थ इति द्रव्यगुणकर्मसु ॥१॥**

जात्यादीनामुपलक्षणम् । [अर्थ] इति द्रव्यगुणकर्मसामान्यविशेषसमवायाभावेषु प्रयुज्यते ॥

घ्राणरसनचक्षुस्त्वगिन्द्रियाण्यत्र व्याख्येयानि, श्रोत्रस्य मनोवत् पूर्वं व्याख्यातत्वात् । तत्र घ्राणादीनि किं पञ्चभूतसमवायिकारणानि पृथिव्याद्येकैकसमवायिकारणानि वा ? तत्र प्रथमं दूषयति—

**द्रव्येषु पञ्चकात्मकम् ॥२॥**

द्रव्यनिरूपणे [द्वितीयाध्याये] पञ्चभूतसमवायिकारणानि न [वस्तूनि स्वीकृतानीति शेषः] [त्र्यात्मकानीति] द्वितीयोऽपि पक्षस्तत्रैव निरस्तः । तस्मात् पृथिव्याद्येकैककारणानीति सिद्धम् ॥

**भूयस्त्वाद् गन्धवत्त्वाच्च पृथिवी गन्धज्ञाने ॥३॥**

प्रकृतिरिति शेषः । गन्धज्ञापकघ्राणे प्रकृतिः समवायिकारणं पृथिवी । न च लोष्टादौ पार्थिवावयवारब्धत्वात् गन्धोपलम्भकत्वप्रसङ्गः, घ्राणत्वजातीयस्य तदुपलम्भकत्वात् । नापि तत्र घ्राणप्रसङ्गः । घ्राणावयवगन्धजन्यघ्राणगन्धे जातिविशेषस्वीकारात्, तज्जातीयगन्धवत्त्वस्य घ्राणत्वव्यञ्जकत्वात् । तदिदमुक्तम् गन्धवत्त्वाच्चेति चकारोऽनुक्तघ्राणजातीयत्वसमुच्चयार्थः । अल्पसलिलाद्यवयवोपष्टब्धबहुतरपार्थिवावयवा [नामुपलम्भो दृश्यते । ] तदिदमुक्तं भूयस्त्वादिति ॥

**तथापस्तेजो वायुश्च ॥४॥**

रसरूप[स्पर्श]ज्ञानेषु समवायिकारणमिति शेषः । यथा घ्राणे पृथिवी [प्रकृतिस्तथा] रसने आप इत्यादि ॥

रसनत्व[ादि] जातिविशेषाणां किं व्यवस्थापकमित्याह—

**रसरूपस्पर्शात् ॥५॥**

रसरूपस्पर्श[ज्ञानाद्रसनत्वादिसिद्धिः । अ]र्थे सत्येव घ्राणादय इति चेत्—न, अनुमानसिद्धत्वात् । चन्दनगन्धकार्यसाक्षात्कारश्चन्दनरूपसाक्षात्काराजनकद्रव्य-जन्यः, कार्य[त्वात् जलरसकार्यसाक्षात्कार]वत् । तेषां पार्थिवत्वादौ किं प्रमाणम् ? घ्राणं पार्थिवम् रूपादिषुमध्ये गन्धस्यैव व्यञ्जकत्वात् । कुङ्कुमगन्धाभिव्यञ्जकतैलादि-वत् । तैलादेः स्वकीयरूपादेरप्यभिव्यञ्जकत्वाद् दृष्टान्तस्य साधनवैकल्या-दिति चेत्—न, घ्राणं पार्थिवम्, रूपसाक्षात्काराजनकगन्धसाक्षात्कारजनकद्रव्य-त्वात् कुङ्कुमवत् । रसनमाप्यम्, गन्धसाक्षात्काराजनकरससाक्षात्कारजनकद्रव्य-त्वादुदकवत् । चक्षुस्तैजम्, रससाक्षात्काराजनकरूपसाक्षात्कारजनकद्रव्य-त्वादालोकवत् । त्वगिन्द्रियं वायवीयम्, रूपसाक्षात्काराजनकस्पर्शसाक्षात्कार-जनकद्रव्यत्वात् व्यजनानिलवत् ॥

॥ इति श्रीमद्वैशेषिके दर्शने अष्टमाध्यायस्य द्वितीयाह्निकम्
अष्टमोऽध्यायश्च ॥

# नवमाध्यायस्य प्रथमाह्निकम्

इन्द्रियार्थाविष्टमे व्याख्यातौ। इदानीं सन्निकर्षप्रतिपादनार्थमयमध्याय आरभ्यते। अभावे सनिकर्षप्रतिपादनार्थं प्रथमाह्निकम्। सन्निकर्षप्रतिपादनार्थं चतुर्विधाभावं प्रतिपिपादयिषुः प्रागभावप्रध्वंसौ दर्शयति—

**क्रियागुणव्यपदेशाभावादसत् ॥१॥**

घटादिकार्यं घटादेः प्रागुत्तरकाले चासत्। घटपूर्वक्षणे घटस्य प्रागभावः। घटोत्तरक्षणे तस्य प्रध्वंसः। घटपूर्वापरकालौ घटवन्तौ कालत्वात् घटकालवदिति चेत्—न, क्रियागुणव्यपदेशाभावात्।

**असति क्रियागुणव्यपदेशाभावादर्थान्तरम् ॥२॥**

अभावो द्रव्यं क्रियावान् गुणवान् क्रियागुण इति व्यपदेशाभावात्। व्यपदेश उपलम्भः शब्दप्रयोगो वा। तस्माद् द्रव्यगुणकर्मभ्योऽर्थान्तरमभावः॥

**सच्चासत् ॥३॥**

यद् घटादिकं क्वचिदेकदेशस्थितमन्यत्रासत् तस्यान्यत्राभावः॥

**यच्चान्यत्सतस्तदसत् ॥४॥**

अन्यदिति भावपरो निर्देशः। यत् सतोऽन्यत्वं तदभावः। चतुर्विधः अभावः प्रत्यक्षो घटादीनाम्। अप्रत्यक्षोऽघटादीनाम्॥

तत्र प्रत्यक्षे साक्षात्कारप्रकारमाह—

**असदिति भूतप्रत्यक्षाभावाद् भूतस्मृतेर्विरोधिप्रत्यक्षत्वाच्च ज्ञानम् ॥५॥**

असदिति ज्ञानं पूर्वमुत्पन्नस्य पटादेः प्रत्यक्षानुपलम्भात् भूतस्य घटादेः प्रतियोगिनः स्मरणाच्च विरोधिनः प्रतियोगिनः प्रत्यक्षयोग्यत्वाच्च जायते। चकारः संबन्धिविशेषणविशेष्यभावसन्निकर्षसमुच्चयार्थः॥

**तथाभावे भावप्रत्यक्षत्वाच्च ॥६॥**

न केवलमभाव[स्य प्रतियोगि]स्मृतेर्ज्ञानमपि तु भावापरोक्षज्ञानादपि। यथेह भूतले घटो नास्तीति। चकारात् क्वचित् प्रतियोग्यनुमानादभावज्ञानम्। यथा-अन्त्यतन्तुसंयोगेन भविष्यत्पटानुमानादिह त[न्तौ पटो भविष्यतीति] ॥

**एतेनाघटोऽगौरधर्मश्च व्याख्यातः ॥७॥**

अयमघट इति घटत्वात्यन्ताभावज्ञानं घटान्योन्याभावज्ञानं वा। अगौरित्यत्रापि तथा। त[दिदमपरोक्ष]फलम्। अधर्मोऽयमिति धर्मत्वात्यन्ताभावज्ञानं धर्मान्योन्याभावज्ञानं वा। तदिद[मनु]मानफलम् ॥

॥ इति श्रीमद्वैशेषिके दर्शने नवमाध्यायस्य प्रथमाह्निकम्[१] ॥



१. अत्र मातृका खण्डिता।

# ॥ परिशिष्टम् ॥

## १

## व्याख्योपस्कारयोः सूत्रसंख्यायां तारतम्यम्

| अध्यायः | आह्निकम् | उपस्कारस्थसंख्या | व्याख्यास्थसंख्या |
|---|---|---|---|
| १ | १ | ३१ | ३१ |
| | २ | १७ | १६ |
| २ | १ | ३१ | ३२ |
| | २ | ३७ | ३७ |
| ३ | १ | १९ | २१ |
| | २ | २१ | १४ |
| ४ | १ | १३ | १२ |
| | २ | ११ | १० |
| ५ | १ | १८ | १६ |
| | २ | २६ | २४ |
| ६ | १ | १६ | १४ |
| | २ | १६ | १८ |
| ७ | १ | २५ | २७ |
| | २ | २८ | २८ |
| ८ | १ | ११ | १२ |
| | २ | ६ | ५ |
| ९ | १ | १५ | ७ |
| | २ | १३ | ३२४[१] |
| १० | १ | ७ | |
| | २ | ९ | |
| | | ३७० | |

१. अन्त्यमाह्निकत्रयमत्र न संकलितम्, अनुपलम्भात् ।

## २

## व्याख्योपस्कारयोः सूत्रपाठे तारतम्यम्

| उपस्कारधृतपाठः | व्याख्याधृतपाठे विशेषः |
|---|---|
| १. १. | |
| अथातो धर्मं व्याख्यास्यामः ॥१॥ | १. १. १ |
| यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः ॥२॥ | १. १. २ |
| तद्वचनादाम्नायस्य प्रामाण्यम् ॥३॥ | १. १. ३ |
| धर्मविशेषप्रसूताद्द्रव्यगुणकर्मसामान्यविशेषसमवयानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम् ॥४॥ | ० |
| पृथिव्यापस्तेजो वायुराकाशं कालो दिगात्मा मन इति द्रव्याणि ॥५॥ | १. १. ४ |
| रूपरसगन्धस्पर्शाः संख्याः परिमाणानि पृथक्त्वं संयोग-विभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणाः ॥६॥ | प्रयत्नश्च १. १. ५ |
| उत्क्षेपणमवक्षेपणमाकुञ्चनं प्रसारणं गमनमिति कर्माणि ॥७॥ | १. १. ६ |
| सदनित्यं द्रव्यवत् कार्यं कारणं सामान्यविशेषवदिति द्रव्यगुणकर्मणामविशेषः ॥८॥ | १. १. ७ |
| द्रव्यगुणयोः सजातीयारम्भकत्वं साधर्म्यम् ॥९॥ | ० |
| द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरम् ॥१०॥ | १. १. ८, ९[१] |
| कर्म कर्मसाध्यं न विद्यते ॥११॥ | १. १. १० |
| न द्रव्यं कार्यं कारणं च वधति ॥१२॥ | तुल॰ कार्याविरोधि द्रव्यं कारणाविरोधि च ॥११॥ |

१. गुणान्तरमिति त्यक्तम् ।

| | | |
|---|---|---|
| उभयथा गुणाः ॥१३॥ | गुणः । | १. १. १२ |
| ० | कारणाभावात् कार्याभावः ॥ | १. १. १३[१] |
| ० | नतु कार्याभावात् कारणाभावः ॥ | १. १. १४[२] |
| कार्यविरोधि कर्म ॥१४॥ | | ० |
| क्रियागुणवत् समवायिकारणमिति द्रव्यलक्षणम् ॥१५॥ | क्रियावद् गुण° | १. १. १५ |
| द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणमनपेक्ष इति गुणलक्षणम् ॥१६॥ | न गुणवान् | १. १. १६ |
| एकद्रव्यमगुणं संयोगविभागेष्वनपेक्षकारणमिति कर्मलक्षणम् ॥१७॥ | °ष्वनपेक्षं | १. १. १७ |
| द्रव्यगुणकर्मणां द्रव्यं कारणं सामान्यम् ॥१८॥ | तुल° | १. १. १८ |
| तथा गुणः ॥१९॥ | | १. १. १९ ; १. १ २४[३] |
| संयोगविभागवेगानां कर्म समानम् ॥२०॥ | तुल° | १. १. २० |
| न द्रव्यानां कर्म ॥२१॥ }<br>व्यतिरेकात् ॥२२॥ } | | [४]१. १. २१ |
| द्रव्यानां द्रव्यं कार्यं सामान्यम् ॥२३॥ | | १. १. २३ |
| गुणवैधर्म्यान्न कर्मणां कर्म ॥२४॥ | तुल° | १. १, २२ |
| द्वित्वप्रभृतयः संख्याः पृथक्त्वसंयोगविभागाश्च ॥२५॥ | | १. १. २५[५] |
| असमवायात् सामान्यकार्यं कर्म न विद्यते ॥२६॥ | | १. १. २६[६] |
| संयोगानां द्रव्यम् ॥२७॥ | | १. १. २७ |
| रूपाणां रूपम् ॥२८॥ | | १. १. २८ |
| गुरुत्वप्रयत्नसंयोगानामुत्क्षेपणम् ॥२९॥ | | १. १. २९ |

---

१. २. एतत् सूत्रद्वितयं व्याख्यामातृकायां द्वितीयाह्निकेऽप्यभ्यस्तम् । उपस्कारे तु द्वितीयाह्निक एवैतयोः पाठः ।

३. गुणः इति बहुवचनान्तता चतुर्विंशे ।

४. व्याख्यामातृकायामेकमेवैतत्सूत्रम् ।

५. प्रभृतयश्चेति चकारोऽधिकः ।

६. सामान्येति नास्ति ।

| | |
|---|---|
| संयोगविभागाश्च कर्मणाम् ॥ ३० ॥ | १. १. ३०[1] |
| कारणसामान्ये द्रव्यकर्मणां कर्माकारणमुक्तम् ॥ ३१ ॥ | १. १ ३१ |

—o—

१. २.

| | |
|---|---|
| कारणाभावात् कार्याभावः ॥ १ ॥ | १. १ १३; १. २. १ |
| न तु कार्याभावात् कारणाभावः ॥ २ ॥ | १. १. १४; १. २, २ |
| सामान्यं विशेष इति बुद्धयपेक्षम् ॥ ३ ॥ | १. २. ३ |
| भावोऽनुवृत्तेरेव हेतुत्वात् सामान्यमेव ॥ ४ ॥ | तुल° १. २. ४ |
| द्रव्यत्वं गुणत्वं कर्मत्वं च सामान्यानि विशेषाश्च ॥ ५ ॥ | १. २. ५[2] |
| अन्यत्रान्त्येभ्यो विशेषेभ्यः ॥ ६ ॥ | १. २. ६ |
| सदिति यतो द्रव्यगुणकर्मसु सा सत्ता ॥ ७ ॥ | सन् यतो -१ २. ७ |
| द्रव्यगुणकर्मभ्योऽर्थान्तरं सत्ता ॥ ८ ॥ | १ २. ८ |
| गुणकर्मसु च भावान्न कर्म न गुणः ॥ ९ ॥ | गुणश्च १. २. ९ |
| सामान्यविशेषाभावेन च ॥ १० ॥ | ० |
| अनेकद्रव्यवत्त्वेन द्रव्यत्वमुक्तम् ॥ ११ ॥ | १. २. १० |
| सामान्यविशेषाभावेन च ॥ १२ ॥ | १. २. ११ |
| तथा गुणेषु भावाद् गुणत्वमुक्तम् ॥ १३ ॥ | १. २. १२ |
| सामान्यविशेषाभावेन च ॥ १४ ॥ | १. २. १३ |
| कर्मसु भावात् कर्मत्वमुक्तम् ॥ १५ ॥ | कर्मणि -१ २. १४ |
| सामान्यविशेषाभावेन च ॥ १६ ॥ | १. २. १५ |
| सदिति लिङ्गाविशेषाद् विशेषलिङ्गाभावाच्चैको भावः ॥ १७ ॥ | १. २. १६[3] |

—o—

२. १

| | |
|---|---|
| रूपरसगन्धस्पर्शवती पृथिवी ॥ १ ॥ | २. १. १ |
| रूपरसस्पर्शवत्य आपो द्रवाः स्निग्धाः ॥ २ ॥ | २. १. २ |
| तेजो रूपस्पर्शवत् ॥ ३ ॥ | २. १. ३ |
| स्पर्शवान् वायुः ॥ ४ ॥ | वायुः स्पर्शवान् २. १. ४ |

१. चकारः परित्यक्तः । २. प्रथमश्चकारः परित्यक्तः । ३. सदितिभागः परित्यक्तः ।

| | |
|---|---|
| ते आकाशे न विद्यन्ते ॥५॥ | २. १, ५ |
| सर्पिर्जतुमधूच्छिष्टानामग्निसंयोगाद् द्रवत्वमद्भिः सामान्यम् ॥६॥ | २. १. ६ |
| त्रपुसीसलोहरजतसुवर्णानामग्निसंयोगाद् द्रवत्वमद्भिः सुवर्णादीनां च सामान्यम् ॥७॥ | तैजसानामग्नि— २. १. ७ |
| विषाणी ककुद्मान् प्रान्तेवालधिः सास्नावानिति गोत्वे दृष्टं लिङ्गम् ॥८॥ | २. १. ८ |
| स्पर्शश्च वायोः ॥९॥ | वायोः स्पर्शश्च २. १. ९ |
| न च दृष्टानां स्पर्श इत्यदृष्टलिङ्गो वायुः ॥१०॥ | न चान्येषां स्पर्श° २. १. १० |
| अद्रव्यवत्वेन द्रव्यम् ॥११॥ | अद्रव्यवत्वाद्... २. १. ११ |
| क्रियावत्वाद् गुणवत्वाच्च ॥१२॥ | ० |
| अद्रव्यत्वेन नित्यत्वमुक्तम् ॥१३॥ | अद्रव्यत्वेना° २. १. १२ |
| वायोर्वायुसंमूर्च्छनं नानात्वलिङ्गम् ॥१४॥ | २. १. १३ |
| वायुसन्निकर्षे प्रत्यक्षाभावाद् दृष्टं लिङ्गं न विद्यते ॥१५॥ | वायुरिति सति सन्निकर्षे २. १. १४ |
| सामान्यतो दृष्टाच्चाविशेषः ॥१६॥ | २. १. १५ |
| तस्मादागमिकम् ॥१७॥ | २. १, १६ |
| संज्ञाकर्म त्वस्मद्विशिष्टानां लिङ्गम् ॥१८॥ | २, १. १७ |
| प्रत्यक्षप्रवृत्तत्वात् संज्ञाकर्मणः ॥१९॥ | प्रत्यक्षपूर्वकत्वात् २. १, १८ |
| निष्क्रमणं प्रवेशनमित्याकाशस्य लिङ्गम् ॥२०॥ | २. १. १९ |
| तदलिङ्गमेकद्रव्यत्वात् कर्मणः ॥२१॥ | २. १, २० |
| कारणान्तरानुक्लृप्तिवैधर्म्याच्च ॥२२॥ | २. १. २१ |
| संयोगादभावः कर्मणः ॥२३॥ | २. १. २२ |
| ० | शब्दः स्पर्शवतामगुण इति २, १. २३ |
| कारणगुणपूर्वकः कार्यगुणो दृष्टः ॥२४॥ | २. १. २४ |
| कार्यान्तराप्रादुर्भावाच्च शब्दः स्पर्शवतामगुणः ॥२५॥ | तुल° २. १. २५ तथा २६ |
| परत्र समवायात्प्रत्यक्षत्वाच्च नात्मगुणो न मनोगुणः ॥२६॥ | तुल° २. १. २७; २. १. २८ तथा २. १. २९ |

| | | |
|---|---|---|
| परिशेषाल्लिङ्गमाकाशस्य ॥२७॥ | | [1]२. १. ३० |
| द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥२८॥ | | २. १. ३१ |
| तत्त्वं भावेन ॥२९॥ | | २. १. ३२ |
| शब्दलिङ्गाविशेषाद् विशेषलिङ्गाभावाच्च ॥३०॥ | | ० |
| तदनुविधानादेकपृथक्त्वं चेति ॥३१॥ | | ० |

—०—

२. २

| | | |
|---|---|---|
| पुष्पवस्त्रयोः सति सनिकर्षे गुणान्तराप्रादुर्भावो वस्त्रे गन्धाभावलिङ्गम् ॥१॥ | गन्धान्तराप्रा° | २. २. १ |
| व्यवस्थितः पृथिव्यां गन्धः ॥२॥ | | २. २. ३ |
| एतेनोष्णता व्याख्याता ॥३॥ | एतेनाप्सूष्णता | २. २. २ |
| तेजस उष्णता ॥४॥ | तेजःसूष्णता | २. २. ४ |
| अप्सु शीतता ॥५॥ | | २. २ ५ |
| अपरस्मिन्नपरं युगपच्चिरं क्षिप्रमिति काललिङ्गानि ॥६॥ | अपरस्मिन् परं युगपद-युगपच्चिरं | २. २. ६ |
| ० | कार्यविशेषेण नानात्वम् | २. २. ७ |
| द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥७॥ | | ० |
| तत्त्वं भावेन ॥८॥ | | ० |
| नित्येष्वभावादनित्येषु भावात् कारणे कालाख्येति ॥९॥ | | २. २. ८ तथा २. २. ९ |
| इत इदमिति यतस्तद् दिश्यं लिङ्गम् ॥१०॥ | दिशां... | २. २. १० |
| द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥११॥ | | ० |
| तत्त्वं भावेन ॥१२॥ | भावात् ॥ | २. २. ११ |
| कार्यविशेषेण नानात्वम् ॥१३॥ | | २. २. १२ |
| आदित्यसंयोगाद्भूतपूर्वाद् भविष्यतो भूताच्च प्राची॥१४॥ | | तुल° २. २ १३; २. २. १४ तथा २. २. १५[2] |

१. परिशेषादित्यत्र शब्द इति । अन्ते च इतिशब्दः ।

२. प्राचीति त्यक्तम् ।

| | | |
|---|---|---|
| तथा दक्षिणा प्रतीची उदीची च ॥१५॥ | | ० |
| एतेन दिगन्तरालानि व्याख्यातानि ॥१६॥ | दिगन्तराणि | २. २. १६ |
| सामान्यप्रत्यक्षाद् विशेषाप्रत्यक्षाद्विशेषस्मृतेश्च संशयः ॥१७॥ | | २, २. १७ |
| दृष्टं च दृष्टवत् ॥१८॥ | तुल° दृष्टमदृष्टं च | २. २. १८ |
| यथादृष्टमयथादृष्टत्वाच्च ॥१९॥ | अयथादृष्टम् | २ २. १९ |
| विद्याविद्यातश्च संशयः ॥२०॥ | तुल° विद्योपलब्धिरविद्यानुपलब्धिः। | २. २. २० |
| श्रोत्रग्रहणो योऽर्थः स शब्दः ॥२१॥ | | २. २. २१ |
| तुल्यजातीयेष्वर्थान्तरभूतेषु विशेषस्योभयथा दृष्टत्वात् ॥२२॥ | तुल° | २. २. २२ |
| एकद्रव्यत्वान्न द्रव्यम् ॥२३॥ | | २. २. २३ |
| नापि कर्माचाक्षुषत्वात् प्रत्ययस्य[1] ॥२४॥ | अचाक्षुषत्वाच्च प्रत्यक्षस्य शब्दो न कर्म | २. २. २४ |
| गुणस्य सतोऽपवर्गः कर्मभिः साधर्म्यम् ॥२५॥ | | २. २. २५ |
| सतो लिङ्गाभावात् ॥२६॥ | | २. २. २६ |
| नित्यवैधर्म्यात् ॥२७॥ | | २. २. २७ |
| अनित्यश्चायं कारणतः ॥२८॥<br>न चासिद्धं विकारात् ॥२९॥ | तुल° कारणवतो विकारात् | २. २. २८[2] |
| अभिव्यक्तौ दोषात् ॥३०॥ | | २. २. २९[3] |
| संयोगाद् विभागाच्च शब्दाच्च शब्दनिष्पत्तिः ॥३१४॥ | विभागाच्छब्दाच्च° | २ २. ३० |
| लिङ्गाच्चानित्यः शब्दः ॥३२॥ | | २. २ ३१[4] |
| द्वयोस्तु प्रवृत्त्योरभावात् ॥३३॥ | | २. २, ३२ |
| ० | संख्याभावात् | २. २. ३३ |
| प्रथमाशब्दात् ॥३४॥ | | ० |
| संप्रतिपत्तिभावाच्च ॥३५॥ | | २. २. ३४; २. २. ३७ |
| सन्दिग्धाः सति, बहुत्वे ॥३६॥ | | २. २. ३५ |
| संख्याभावः सामान्यतः ॥३७॥ | सामान्यवतः। | २. २. ३६ |

१. प्रत्ययस्येति मुम्बापुरीग्रन्थेऽधिकम् ।

२. न्यायवार्त्तिकेऽप्ययमेव सूत्रपाठः । द्र: तत्रैव २७८ पृ०

३. अभिव्यक्ताविति नास्ति । ४. शब्द इति नास्ति ।

३. १

| | | |
|---|---|---|
| प्रसिद्धा इन्द्रियार्थाः ॥१॥ | | ३. १ १ |
| ० | इन्द्रियार्थप्रसिद्धिरिन्द्रियार्थेभ्यः ॥२॥ | |
| इन्द्रियार्थप्रसिद्धिरिन्द्रियार्थेभ्योऽर्थान्तरस्य हेतुः ॥२॥ | | ३. १. ३[1] |
| सोऽनपदेशः ॥३॥ | | ३ १. ४ |
| कारणाज्ञानात् ॥४॥ | | ३. १. ५ |
| कार्येषु ज्ञानात् ॥५॥ | कार्याज्ञा° | ३. २. ६ |
| अज्ञानाच्च ॥६॥ | | ३. १. ७ |
| अन्यदेव हेतुरित्यनपदेशः ॥७॥ | अन्य एव | ३. १. ८ |
| अर्थान्तरं ह्यर्थान्तरस्यानपदेशः ॥८॥ | °न्तरमर्था° | ३. १. ९ |
| संयोगि समवाय्येकार्थसमवायि विरोधि च ॥९॥ | | ३. १. १०[2] |
| कार्यं कार्यान्तरस्य ॥१०॥ | | ३. १. ११ |
| ० | कारणं कारणान्तरस्य | ३. १. १२ |
| विरोध्यभूतं भूतस्य ॥११॥ | | ३. १. १३ |
| भूतमभूतस्य ॥१२॥ | | ३. १. १४ |
| भूतो भूतस्य ॥१३॥ | भूतं | ३. १. १५ |
| ० | अभूतमभूतस्य | ३, १. १६ |
| प्रसिद्धिपूर्वकत्वादपदेशस्य ॥१४॥ | | ३. १. १७ |
| अप्रसिद्धोऽनपदेशोऽसन् सन्दिग्धश्चानपदेशः ॥१५॥ | | ३. १. १८; ३. १. १९[3] |
| यस्माद् विषाणी तस्मादश्वः ॥१६॥ | | ० |
| यस्माद् विषाणी तस्माद् गौरिति चानैकन्तिकस्योदाहरणम् ॥१७॥ | | ० |
| आत्मेन्द्रियार्थसन्निकर्षाद्यन्निष्पद्यते तदन्यत् ॥१८॥ | °न्द्रियमनोऽर्थ° | ३. १. २० |
| प्रवृत्तिनिवृत्ती च प्रत्यगात्मनि ... परत्र लिङ्गम् ॥१९॥ | | ३. १. २१ |

—०—

३. २

आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्य भावोऽभावश्च मनसो °स्याभावो भावश्च

लिङ्गम् ॥१॥

१. प्रसिद्धेरिति पाठः । २. चकारस्त्यक्तः । द्वितीयोऽनपदेशशब्दो नास्ति ।

| | | |
|---|---|---|
| तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥२॥ | | ३. २. २[१] |
| प्रयत्नायौगपद्याज् ज्ञानायौगपद्याच्चैकम् ॥३॥ | °च्चैकं मनः ॥ | ३. २. ३ |
| प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तर-विकाराः सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनोलिङ्गानि ॥४॥ | विकाराः परात्मनि लिङ्गम् । | ३. २. ४ |
| तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥५॥ | | ३. २. ५[२] |
| यज्ञदत्त इति सन्निकर्षे प्रत्यक्षाभावाद् दृष्टं लिङ्गं न विद्यते ॥६॥ | अहं यज्ञदत्त° | ३. २. ६ |
| सामान्यतोदृष्टाच्चाविशेषः ॥७॥ | | ३. २. ७ |
| तस्मादागमिकः ॥८॥ | | ३. २. ८[३] |
| अहमितिशब्दस्य व्यतिरेकान्नागमिकम् ॥९॥ | °शब्दव्यतिरेकेण नागमिकम् ॥ | ३. २. ९ |
| यदि दृष्टमन्वक्षमहं देवदत्तोऽहं यज्ञदत्त इति॥१०॥ | यदि च द्रष्टुः प्रत्यक्षोऽहं यज्ञदत्तः॥ | ३. २. १० |
| दृष्ट आत्मनि लिङ्गे एक एव दृढत्वात् प्रत्यक्षवत् प्रत्ययः ॥११॥ | | ० |
| देवदत्तो गच्छति यज्ञदत्तो गच्छतीत्युपचाराच्छरीरे प्रत्ययः ॥१२॥ | | ० |
| सन्दिग्धस्तूपचारः ॥१३॥ | | ३. २. ११ |
| अहमिति प्रत्यगात्मनि भावात् परत्राभावादर्थान्तरप्रत्यक्षः ॥३१॥ | | ३. २. १२ |
| देवदत्तो गच्छतीत्युपचारादभिमानात् तावच्छरीरप्रत्यक्षोऽहंकारः ॥१५॥ | | ० |
| सन्दिग्धस्तूपचारः ॥१६॥ | | ० |
| न तु शरीरविशेषाद् यज्ञदत्तविष्णुमित्रयोर्ज्ञानं विषयः॥१७॥ | °र्ज्ञानविशेषः । | ३.२.१३ |
| अहमिति मुख्ययोगाभ्यां शब्दवद्व्यतिरेकाव्यभिचाराद् विशेषसिद्धेर्नागमिकः ॥१८॥ | | ० |
| सुखदुःखज्ञाननिष्पत्त्यविशेषादैकात्म्यम् ॥१९॥ | दैकात्म्ये न व्यवस्था । | ३. २. २८ |
| व्यवस्थातो नाना ॥२०॥ | | ० |
| शास्त्रसामर्थ्याच्च ॥२१॥ | | ० |

—०—

४. १

| | | |
|---|---|---|
| सदकारणवन्नित्यम् ॥१॥ | | ४. १ १ |

---

१. तस्येति नास्ति । २. तस्येति नास्ति । ३. आगमिकमिति नपुंसकनिर्देशः ।

| | | |
|---|---|---|
| तस्य कार्यं लिङ्गम् ॥२॥ | | ४. १. २ |
| कारणभावात् कार्यभावः ॥३॥ | °णाभावाद्धि कार्या | ४. १. ३ |
| अनित्य इति विशेषतः प्रतिषेधभावः ॥४॥ | | ० |
| अविद्या ॥५॥ | अविद्या चास्मदादीनाम् ॥४॥ | |
| महत्यनेकद्रव्यवत्त्वाद् रूपाच्चोपलब्धिः ॥६॥ | | ४. १. ५. |
| ० | अद्रव्यवत्त्वात् परमाणावनुपलब्धिः ॥ | ४. १. ६ |
| सत्यपि द्रव्यत्वे महत्त्वे रूपसंस्काराभावाद् वायोरनुपलब्धिः ॥७॥ | | ४. १. ७[1] |
| अनेकद्रव्यसमवायाद् रूपविशेषाच्च रूपोपलब्धिः ॥८॥ | | ० |
| तेन रसगन्धस्पर्शेषु ज्ञानं व्याख्यातम् ॥९॥ | एतेन रस° | ४. १. ८ |
| तस्याभावादव्यभिचारः ॥१०॥ | तदभा° | ४. १. ९ |
| संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे कर्म च रूपिद्रव्यसमवायाच्चाक्षुषाणि ॥११॥ | | ४. १. १० |
| अरूपिष्वचाक्षुषाणि ॥१२॥ | °चाक्षुषत्वात् | ४. १. ११ |
| एतेन गुणत्वे भावे च सर्वेन्द्रियं ज्ञानं व्याख्यातम् ॥१३॥ | | ४. १. १२ |

—०—

४. २

| | | |
|---|---|---|
| तत्पुनः पृथिव्यादि कार्यद्रव्यं त्रिविधं शरीरेन्द्रियविषयसंज्ञकम् ॥१॥ | | ० |
| प्रत्यक्षाप्रत्यक्षाणां संयोगस्याप्रत्यक्षत्वात् पञ्चात्मकं न विद्यते ॥२॥ | °प्रत्यक्षवृत्तेरप्रत्यक्षत्वाद् वायुवनस्पति-संयोगवत् पञ्चा° | ४. २. १ |
| गुणान्तराप्रादुर्भावाच्च न त्र्यात्मकम् ॥३॥ | त्र्यात्मकमपि [न] | ४. २. २ |
| ० | आत्मसंयोगश्च प्रतिषिद्धो मिथः पञ्चानाम् ॥३॥ | |
| अणुसंयोगस्त्वप्रतिषिद्धः ॥४॥ | तुल° अणुसंयोगस्त्वप्रतिषिद्धो मिथः पञ्चानाम् ॥४॥ | |
| तत्र शरीरं द्विविधं योनिजमयोनिजं च ॥५॥ | तच्च° | ४. २. ५ |
| अनियतदिग्देशपूर्वकत्वात् ॥६॥ | अनेकदेश° | ४. २. ७ |

१. सत्यपि द्रव्यत्वे महत्त्वे इति भागो नास्ति ।

| | | |
|---|---|---|
| धर्मविशेषाच्च ।।७।। | | ४. २. ७[1] |
| ० | कार्यविशेषात् । | ४. २. ८ |
| समाख्याभावाच्च ॥८॥ | | ४. २. ९[2] |
| संज्ञाया आदित्वात् ॥९॥ | संज्ञादिमत्त्वात् । | ४. २. १० |
| सन्त्ययोनिजाः ॥१०॥ | | ० |
| वेदलिङ्गाच्च ॥११॥ | | ० |

—०—

५. १

| | | |
|---|---|---|
| आत्मसंयोगप्रयत्नाभ्यां हस्ते कर्म ॥१॥ | | ५. १. १ |
| तथा हस्तसंयोगाच्च मुसले कर्म ॥२॥ | | ० |
| अभिघातजे मुसलादौ कर्मणि व्यतिरेकादकारणं हस्तसंयोगः ॥२॥ | | ५. १. २ |
| तथात्मसंयोगो हस्तकर्मणि ॥४॥ | | ५. १. ३ |
| अभिघातान्मुसलसंयोगाद्धस्ते कर्म ॥५॥ | मुसलाभिघाताच्च मुसल° | ५. १. ४ |
| आत्मकर्म हस्तसंयोगाच्च ॥ | तथा आत्म° | ५. १. ५ |
| संयोगाभावे गुरुत्वात् पतनम् ॥७॥ | | ५. १. ६ |
| नोदनविशेषाभावान्नोर्ध्वं न तिर्यग्गमनम् ॥८॥ | | ५. १. ७ |
| प्रयत्नविशेषान्नोदनविशेषः ॥९॥ | | ५. १. ८ |
| नोदनविशेषादुदसनविशेषः ॥१०॥ | | ५. १. ९ |
| हस्तकर्मणा दारककर्म व्याख्यातम् ॥११॥ | | ५. १, १० |
| तथा दग्धस्य विस्फोटने ॥१२॥ | | • |
| यत्नाभावे प्रसुप्तस्य चलनम् ॥१३॥ | प्रयत्नाभावो गुरुत्वात् सुप्तस्य पतनम् ॥११॥ | |
| तृणे कर्म वायुसंयोगात् ॥१४॥ | | ५. १. १२ |
| मणिगमनं सूच्यभिसर्पणमित्यदृष्टकारणकम् ॥१५॥ | °कारितानि | ५. १. १३ |
| इषावयुगपत् संयोगविशेषाः कर्मान्यत्वे हेतुः ॥१६॥ | | ५. १. १४ |
| नोदनादाद्यमिषोः कर्म तत्कर्मकारिताच्च संस्कारादुत्तरं तथोत्तरमुत्तरं च ॥१७॥ | | ५. १. १५ |

१. २. उभयत्र चकारस्त्यक्तः ।

| | | |
|---|---|---|
| संस्काराभावे गुरुत्वात् पतनम् ॥१८॥ | | ५. १. १६ |

—०—

५. २

| | | |
|---|---|---|
| नोदनाभिघातात् संयुक्तसंयोगाच्च पृथिव्यां कर्म ॥१॥ | | ५. २. १ |
| तद्विशेषेणादृष्टकारितम् ॥२॥ | | ० |
| अपां संयोगाभावे गुरुत्वात् पतनम् ॥३॥ | | ५. २. २ |
| द्रवत्वात् स्यन्दनम् ॥४॥ | | ५. २. ३ |
| नाड्यो वायुसंयोगादारोहणम् ॥५॥ | नाड्या | ५. २. ४ |
| नोदनापीडनात् संयुक्तसंयोगाच्च ॥६॥ | | ५. २. ५ |
| वृक्षाभिसर्पणमित्यदृष्टकारितम् ॥७॥ | °कारितानि । | ५ २. ६ |
| अपां संघातो विलयनं च तेजःसंयोगात् ॥८॥ | | ० |
| तत्र विस्फूर्जथुर्लिङ्गम् ॥९॥ | तत्रापस्फूर्जथु° | ५. २. ७ |
| वैदिकं च ॥१०॥ | | ५. २. ८ |
| अपां संयोगाद् विभागाच्च स्तनयित्नो ॥११॥ | स्तनयित्नुः । | ५. २. ९ |
| पृथिवीकर्मणा तेजःकर्म वायुकर्म च व्याख्यातम् ॥१२॥ | तेजसः | ५. २. १० |
| अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनमणूनां मनसश्चाद्यं कर्मादृष्टकारितम् ॥१३॥ | °मणुमनसोश्चाद्यं कर्मेत्यदृष्टकारितानि | ५. २. ११ |
| हस्तकर्मणा मनसः कर्म व्याख्यातम् ॥१४॥ | | ० |
| आत्मेन्द्रियमनोऽर्थसन्निकर्षात् सुखदुःखे ॥१५॥ | | ५. २. १२ |
| तदनारम्भ आत्मस्थे मनसि शरीरस्य दुःखाभावः स योगः ॥१६॥ | तदनारम्भश्च...मनसि । सशरीरस्य सुखदुःखाभावः ॥१४॥ संयोगः ॥१५॥[1] | ५. २. १३ |
| ० | कायकर्मणात्मकर्मधर्मयोरनुत्पत्तिः ॥१६॥ | |
| अपसर्पणमुपसर्पणमशितपीतसंयोगाः कार्यान्तरसंयोगाश्चेत्यदृष्टकारितानि ॥१७॥ | | ५. २. १७ |
| तदभावे संयोगाभावोऽप्रादुर्भावश्च मोक्षः ॥१८॥ | स मोक्षः । | ५. २. १८ |
| द्रव्यगुणकर्मनिष्पत्तिवैधर्म्यादभावस्तमः ॥१९॥ | | ५. २. १९[2] |
| तेजसो द्रव्यान्तरेणावरणाच्च ॥२०॥ | | ० |

---

१. १३, १४, १५ सूत्राणि एकत्रवोपस्कारस्य षोडशसूत्र ग्रथितानि ।

२. अत्र भाऽभावस्तम इति पाठो व्याख्यानुमतः ।

| | | |
|---|---|---|
| दिक्कालावाकाशं च क्रियावद्वैधर्म्यान्निष्क्रियाणि ॥२१॥ | °क्रियावद्भ्यो वैध° | ५. २. २० |
| एतेन कर्माणि गुणाश्च व्याख्याता: ॥२२॥ | | ५. २. २१ |
| निष्क्रियाणां समवाय: कर्मभ्यो निषिद्ध: ॥२३॥ | °कर्मभि: प्रतिषिद्ध: । | ५. २. २२ |
| कारणं त्वसमवायिनो गुणा: ॥२४॥ | | ० |
| गुणैर्दिग् व्याख्याता ॥२५॥ | गुणैश्च दिग्° | ५. २. २३ |
| कारणेन काल: ॥२६॥ | | ५. २. २४ |

—०—

६. १

| | | |
|---|---|---|
| बुद्धिपूर्वा वाक्यकृतिर्वेदे ॥१॥ | वेद: | ६. १. १ |
| ० | स वा अस्मद्बुद्ध्यन्यो लिङ्गमृषे:[1] ॥ | ६. १. २ |
| ब्राह्मणे संज्ञाकर्म सिद्धिलिङ्गम् ॥२॥ | ब्राह्मणसंज्ञा° | ६. १. ३ |
| बुद्धिपूर्वो ददाति: ॥३॥ | | ६. १. ४ |
| तथा प्रतिग्रह: ॥४॥ | | ६. १. ५ |
| ० | तयोश्च क्रमो यथानितरेतराङ्गभूतानाम् ॥६॥ | |
| आत्मान्तरगुणानामात्मान्तरेऽकारणत्वात् ॥५॥ | आत्मगुणेष्वात्मान्तरगुणानामकारणत्वात् ॥ | ६. १ ७ |
| ० | अदुष्टभोजनात् समभिव्याहारतोऽभ्युदय: ॥ | ६. १. ८ |
| तद् दुष्टभोजने न विद्यते ॥६॥ | | ६ १. ९ |
| दुष्टं हिंसायाम् ॥७॥ | | ६. १. १० |
| तस्य समभिव्याहारतो दोष: ॥८॥ | | ० |
| तददुष्टे न विद्यते ॥९॥ | | ६. १. ११ |
| पुनर्विशिष्टे प्रवृत्ति: ॥१०॥ | | ० |
| समे हीने वा प्रवृत्ति: ॥११॥ | | ० |
| एतेन हीनसमविशिष्टधार्मिकेभ्य: परस्वादानं व्याख्यातम् ॥१२॥ | | ० |
| तथा विरुद्धानां त्याग: ॥१३॥ | | ६. १. १२ |

---

१. इदं सूत्रं न्यायकन्दल्यां किरणावल्यां च धृतम् । तुल° अस्मद्बुद्धिभ्यो लिंगमृषे: कन्द° २१६, किर० ११५

| | |
|---|---|
| हीने परे त्यागः ॥१४॥ | ० |
| समे आत्मत्यागः परत्यागो वा ॥१५॥ | ६. १. १३ |
| विशिष्टे आत्मत्याग इति ॥१६॥ | ६. १. १४[1] |

—०—

६. २

| | |
|---|---|
| दृष्टादृष्टप्रयोजनानां दृष्टाभावे प्रयोजनमभ्युदयाय ॥१॥ | दृष्टानां दृष्ट° ६. २. १ |
| अभिषेचनोपवासब्रह्मचर्यगुरुकुलवासनानप्रस्थयज्ञदान-प्रोक्षणदिङ्नक्षत्रमन्त्रकालनियमाश्चादृष्टाय ॥२॥ | ६. २. २ |
| चातुराश्रम्यमुपधा अनुपधाश्च ॥३॥ | चातुराश्रम्यम् ॥३॥ |
| | उपधाऽनुपधाश्च ॥४॥ |
| भावदोष उपधाऽदोषोऽनुपधा ॥४॥ | भावदोष उपधा ॥५॥ |
| यदिष्टरूपरसगन्धस्पर्शं प्रोक्षितमभ्युक्षितं च तच्छुचि ॥५॥ | ६. २. ६ |
| अशुचीति शुचिप्रतिषेधः ॥६॥ | ६ २. ७ |
| अर्थान्तरं च ॥७॥ | ६. २. ८ |
| अयतस्य शुचिभोजनादभ्युदयो न विद्यते नियमाभावाद् विद्यते वाऽर्थान्तरत्वाद् यमस्य ॥८॥ | अयतस्य…न विद्यते ॥९॥ |
| असति चाभावात् ॥९॥ | ६. २. १० |
| सुखाद् रागः ॥१०॥ | ६. २. ११ |
| तन्मयत्वाच्च ॥११॥ | ० |
| ० | न तृप्तः॥ ६. २. १२ |
| अदृष्टाच्च ॥१२॥ | ६. २. १३ |
| | एतेन द्वेषो व्याख्यातः ॥१४॥ |
| जातिविशेषाच्च ॥१३॥ | जातिविशेषाच्च रागविशेषः ॥१५॥ |
| इच्छाद्वेषपूर्विका धर्माधर्मयोः प्रवृत्तिः ॥१४॥ | • |
| तत्संयोगो विभागः ॥१५॥ | तुल° ततः संयोगः ॥ ६. २. १६ |
| | विभागश्च ॥ ६. २. १७ |

१. इतिशब्दः परित्यक्तः ॥

| | | |
|---|---|---|
| आत्मकर्मसु मोक्षो व्याख्यातः ॥१६॥ | | ६. २. १८ |

—०—

७. १

| | | |
|---|---|---|
| उक्ता गुणाः ॥१॥ | | ७. १. १ |
| पृथिव्यादिरूपरसगन्धस्पर्शा द्रव्यानित्यत्वादनित्याश्च ॥२॥ | | ० |
| एतेन नित्येषु नित्यत्वमुक्तम् ॥३॥ | नित्येष्वप्य॰ | ७. १. २ |
| अप्सु तेजसि वायौ च नित्या द्रव्यनित्यत्वात् ॥४॥ | नित्यत्वं | ७. १. ३ |
| अनित्येष्वनित्या द्रव्यानित्यत्वात् ॥५॥ | | ७. १. ४ |
| कारणगुणपूर्वकाः पृथिव्यां पाकजाः ॥६॥ | कारणगुणपूर्वकाः पृथिव्याम् ॥५॥ | |
| | पाकजाश्च ॥ | ७. १. ६ |
| ० | अप्सु तेजसि वायौ च कारणगुणपूर्वकाः ॥७॥ | |
| ० | कर्मगुणा अगुणाः ॥८॥ | |
| ० | एतेन पाकजा व्याख्याताः ॥९॥ | |
| एकद्रव्यत्वात् ॥७॥ | एकद्रव्यत्वाच्च | ७. १. १० |
| अणोर्महतश्चोपलब्ध्यनुपलब्धी नित्ये व्याख्याते ॥८॥ | | ७. १. ११ |
| कारणबहुत्वाच्च ॥९॥ | तुल॰ कारणबहुत्वात् कारणमहत्त्वात् प्रचयविशेषाच्च महत् ॥१२॥ | |
| अतो विपरीतमणु ॥१०॥ | | ० |
| अणुमहदिति तस्मिन् विशेषभावात् विशेषभावाच्च ॥११॥ | | ७. १. १३ |
| एककालत्वात् ॥१२॥ | | ७. १ १४ |
| दृष्टान्ताच्च ॥१३॥ | | ७. १. १५ |
| अणुत्वमहत्त्वयोरणुत्वमहत्त्वाभावः कर्मगुणैर्व्याख्यातः ॥१४॥ | | ७. १. १६ |
| कर्मभिः कर्माणि गुणैश्च गुणा व्याख्याताः ॥१५॥ | कर्मभिः कर्माणि ॥१९॥ गुणैर्गुणाः ॥२०॥ | |
| अणुत्वमहत्त्वाभ्यां कर्मगुणाश्च व्याख्याताः ॥१६॥ | | ७. १. १७ |
| एतेन दीर्घत्वह्रस्वत्वे व्याख्याते ॥१७॥ | | तुल॰ ७. १. १८ |

| | | |
|---|---|---|
| अनित्येऽनित्यम् ॥१८॥ | | ० |
| नित्ये नित्यम् ॥१९॥ | | ० |
| ० | एतदनित्यम् | ७. १. ११ |
| नित्यं परिमण्डलम् ॥२०॥ | | ७. १. २२ |
| अविद्या च विद्यालिङ्गम् ॥२१॥ | | ७. १. २३ |
| विभवान्महानाकाशस्तथा चात्मा ॥२२॥ | | ७. १. २४ |
| तदभावादणु मनः ॥२३॥ | | ७. १. २५ |
| गुणैर्दिग् व्याख्याता ॥२४॥ | | ७. १. २६ |
| कारणे कालः ॥२५॥ | कारणेन | ७. १. २७ |

—०—

७. २

| | | |
|---|---|---|
| रूपरसगन्धस्पर्शव्यतिरेकादर्थान्तरमेकत्वम् ॥१॥ | | ७. २. १ |
| तथा पृथक्त्वम् ॥२॥ | | ७. २. २ |
| एकत्वैकपृथक्त्वयोरेकत्वैकपृथक्त्वाभावोऽणुत्व महत्त्वाभ्यां व्याख्यातः ॥३॥ | | ७. २. ३ |
| ० | कर्मभिः कर्माणि ॥४॥ | |
| ० | गुरौर्गुणाः ॥५॥ | |
| निःसंख्यत्वात्कर्मगुणानां सर्वैकत्वं न विद्यते ॥४॥ | | ७. २. ६ |
| भ्रान्तं तत् ॥५॥ | | ० |
| एकत्वाभावाद् भक्तिस्तु न विद्यते ॥६॥ | एकस्या···भाक्तं° | ७. २. ७ |
| कार्यकारणयोरेकत्वैकपृथक्त्वाभावादेकत्वैकपृथक्त्वं न विद्यते ॥७॥ | °रेकत्वपृथक्त्वाभावादेकत्वपृथक्त्वं | ७. २. ८ |
| एतदनित्ययोर्व्याख्यातम् ॥८॥ | | ७. २. ९ |
| अन्यतरकर्मज उभयकर्मजः संयोगजश्च संयोगः ॥९॥ | | ७. २. १० |
| एतेन विभागो व्याख्यातः ॥१०॥ | | ७. २. ११ |
| संयोगविभागयोः संयोगविभागाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः ॥११॥ | | ७. २. १२ |
| कर्मभिः कर्माणि गुणैर्गुणा अणुत्वमहत्त्वाभ्यामिति ॥१२॥ | कर्मभिः कर्माणि ॥१३॥ गुणैर्गुणाः ॥१४॥ | |

| | | |
|---|---|---|
| युतसिद्ध्यभावात् कार्यकारणयोः संयोगविभागौ न विद्येते ॥१३॥ | | ७. २. १५ |
| गुणत्वात् ॥१४॥ | | • |
| गुणोऽपि विभाव्यते ॥१५॥ | गुणे च भाष्यते ॥१६॥ | |
| निष्क्रियत्वात् ॥१६॥ | | ७. २. १७ |
| अस्ति नास्तीति च प्रयोगात् ॥१७॥ | | • |
| शब्दार्थावसम्बन्धौ ॥१८॥ | | ७. २. १८ |
| संयोगिनो दण्डात् समवायिनो विशेषाच्च ॥१९॥ | विषाणाच्च दृष्टत्वादहेतुः ॥१९॥ | |
| सामयिकः शब्दार्थप्रत्ययः ॥२०॥ | | ७. २. २० |
| एकदिक्काभ्यामेककालाभ्यां सन्निकृष्टविप्रकृष्टाभ्यां परमपरं च ॥२१॥ | | ७. २. २१[1] |
| कारणपरत्वात् कारणापरत्वाच्च ॥२२॥ | | ७. २. २२ |
| परत्वापरत्वयोः परत्वापरत्वाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः ॥२३॥ | | ७. २. २३ |
| कर्मभिः कर्माणि ॥२४॥ | | ७. २. २४ |
| गुणैर्गुणाः ॥२५॥ | | ७. २. २५ |
| इहेदमिति यतः कार्यकारणयोः स समवायः ॥२६॥ | | ७. २. २६ |
| द्रव्यत्व गुणत्वप्रतिषेधो भावेन व्याख्यातः ॥२७॥ | द्रव्यगुणकर्मत्वप्र° | ७. २. २७ |
| तत्त्वं भावेत् ॥२८॥ | | ७. २. २८ |

—०—

८. १

| | | |
|---|---|---|
| द्रव्येषु ज्ञानं व्याख्यातम् ॥१॥ | | ८. १. १ |
| तत्रात्मा मनश्चाप्रत्यक्षे ॥२॥ | | ०[2] |
| ज्ञाननिर्देशे ज्ञाननिष्पत्तिविधिरुक्तः ॥३॥ | °निष्पत्तिरुक्ता ॥ | ८. १. २ |
| ० | आत्ममनसी कारणे व्याख्याते ॥३॥ | |
| गुणकर्मसु सन्निकृष्टेषु ज्ञाननिष्पत्तेर्द्रव्यं कारणम् ॥४॥ | | ८. १. ४ |
| सामान्यविशेषेषु सामान्यविशेषाभावात् तत एव ज्ञानम् ॥५॥ | | ० |
| सामान्यविशेषापेक्षं द्रव्यगुणकर्मसु ।६॥ | | ८. १. ५ |
| द्रव्ये द्रव्यगुणकर्मापेक्षम् ॥७॥ | | ८. १. ६ |

१. एककालाभ्यामिति परित्यक्तम् ।

२. अत्र ग्रन्थभ्रंशेन तत्रात्मा मनश्चाप्रत्यक्ष इति सूत्रमपि गतमिति प्रतिभाति ।

गुणकर्मसु गुणकर्माभावाद् गुणकर्मापेक्षं न विद्यते ॥८॥ ८. १. ७
समवायिनः श्वैत्यात् श्वैत्यबुद्धेश्च श्वेते बुद्धिस्ते एते कार्यकारणभूते ॥९॥ °स्ते कार्यं ८. १. ८
द्रव्येष्वनितरेतरकारणाः ॥१०॥ कारणाः प्रत्ययाः]। ८. १. ९
कारणायौगपद्यात् कारणक्रमाच्च घटपटादिबुद्धीनां क्रमो न हेतुफलभावात् ॥११॥ ८. १. १०

—०—

८. २

अयमेष त्वया कृतं भोजयैनमिति बुद्ध्यपेक्षम् ॥१॥ अयं त्वया भोजयै° ८. १. ११[१]
दृष्टेषु भावाददृष्टेष्वभावात् ॥२॥ ८. १. १२[२]
अर्थ इति द्रव्यगुणकर्मसु ॥३॥ ८. २. १
द्रव्येषु पञ्चात्मकत्वं प्रतिषिद्धम् ॥४॥ द्रव्येषु पञ्चकात्मकम् ॥२॥
भूयस्त्वाद् गन्धवत्त्वाच्च पृथिवी गन्धज्ञाने प्रकृतिः ॥५॥ ८. २. ३[३]
तथापस्तेजो वायुश्च रसरूपस्पर्शाविशेषात् ॥६॥ तथापस्तेजो वायुश्च ॥४॥ रसरूपस्पर्शात् ॥५॥

—०—

९. १

क्रियागुणव्यपदेशाभावात् प्रागसत् ॥१॥ °भावादसत् ॥ ९. १. १
सदसत् ॥२॥ ०
असतः क्रियागुणव्यपदेशाभावादर्थान्तरम् ॥३॥ असति ९. १. २
सच्चासत् ॥४॥ ९. १. ३
यच्चान्यदसदतस्तदसत् ॥५॥ यच्चान्यत्सत° ९. १. ४
असदिति भूतप्रत्यक्षाभावाद् भूतस्मृतेर्विरोधिप्रत्यक्षवत् ॥६॥ °विरोधिप्रत्यक्षत्वाच्च ज्ञानम् ९. १. ५
तथाभावे भावप्रत्यक्षत्वाच्च ॥७॥ ९. १. ५
एतेनाघटोऽगौरधर्मश्च व्याख्यातः ॥८॥ ९. १. ६[४]
अभूतं नास्तीत्यनर्थान्तरम् ॥९॥

---

१. २. सूत्राद्वितयमेतत् प्रथमाह्निकस्थमिति व्याख्याकाराः। उपस्कारे तु द्वितीयाह्निके पठितम्।

३. प्रकृतिरिति नास्ति।

४. इतः परं मातृका खण्डिता। आह्निकसमाप्तिसूचकं वाक्यं त्वितः परमेवोपलभ्यते।

नास्ति घटो गेहे इति सतो घटस्य गेहसंसर्गप्रतिषेधः ॥१०॥
आत्मन्यात्ममनसोः संयोगविशेषादात्मप्रत्यक्षम् ॥११॥
तथा द्रव्यान्तरेषु प्रत्यक्षम् ॥१२॥
असमाहितान्तःकरणा उपसंहृतसमाधयस्तेषां च ॥१३॥
तत्समवायात् कर्मगुणेषु ॥१४॥
आत्मसमवायादात्मगुणेषु ॥१५॥

—०—

९. २

अस्येदं कार्यं कारणं संयोगि विरोधि समवायि चेति लैङ्गिकम् ॥१॥
अस्येदं कार्यकारणसंबन्धश्चावयवाद् भवति ॥२॥
एतेन शाब्दं व्याख्यातम् ॥३॥
हेतुरपदेशो लिङ्गं प्रमाणं कारणमित्यनर्थान्तरम् ॥४॥
अस्येदमिति बुद्धयपेक्षितत्वात् ॥५॥
आत्ममनसोः संयोगविशेषात् संस्काराच्च स्मृतिः ॥६॥
तथा स्वप्नः ॥७॥
स्वप्नान्तिकम् ॥८॥
धर्माच्च ॥९॥
इन्द्रियदोषात् संस्कारदोषाच्चाविद्या ॥१०॥
तद्दुष्टज्ञानम् ॥११॥
अदुष्टं विद्या ॥१२॥
आर्षं सिद्धदर्शनं च धर्मेभ्यः ॥१३॥

—०—

१०. १

इष्टानिष्टकारणविशेषाद् विरोधाच्च मिथः सुखदुःखयोरर्थान्तरभावः ॥१॥
संशयनिर्णयान्तराभावश्च ज्ञानान्तरत्वे हेतुः ॥२॥
तयोर्निष्पत्तिः प्रत्यक्षलैङ्गिकाभ्याम् ॥३॥
अभूदित्यपि ॥४॥
सति च कार्यादर्शनात् ॥५॥

एकार्थसमवायिकारणान्तरेषु दृष्टत्वात् ॥६॥
एकदेश इत्येकस्मिन् शिरः पृष्ठमुदरं मर्माणि तद्विशेषस्तद्विशेषेभ्यः ॥७॥

—०—

१०. २

कारणमिति द्रव्ये कार्यसमवायात् ॥१॥
संयोगाद् वा ॥२॥
कारणे समवायात् कर्माणि ॥३॥
तथा रूपे कारणैकार्थसमवायाच्च ॥४॥
कारणसमवायात् संयोगः पटस्य ॥५॥
कारणकारणसमवायाच्च ॥६॥
संयुक्तसमवायादग्नेर्वैशेषिकम् ॥७॥
दृष्टानां दृष्टप्रयोजनानां दृष्टाभावे प्रयोगोऽभ्युदयाय ॥८॥
तद्वचनादाम्नायस्य प्रामाण्यमिति ॥९॥

——❀❀——

३

## विशिष्टनामसूची



